शिथिली कृतानि मन्दविपाकी कृतानि, कर्माणि 'णिट्ठियाइं कयाइं' निष्ठितानि कृतानि-निःसत्ताकानि विहितानि 'विप्परिणामियाइं' विपरिणामितानि स्थिति घातरसघातादिभिर्विपरिणामं नीतानि तानि कर्माणि झटिति विनाशम् उपयान्तीत्यर्थः खिप्पामेव परिविद्धत्थाइं भवंति' क्षिप्रमेव परिविध्वस्तानि भवन्ति शीघ्रमेव यथास्यात्तथा नष्टानि भवन्ति तानि कर्माणि 'जावइयं तावइयं जाव महापज्जवसाणा भवंति' यावत्कां तावत्कामपि खलु यावत् महापर्यवसाना भवन्ति, अत्र यावत्पदेन 'पि य णं ते वेयणं वेएमाणा महानिज्जरा' अपि खलु ते वेदनां वेदयमाना महानिर्जराः इत्यस्य सङ्ग्रहो भवति। पुनरपि दृष्टान्तमाह-'से जहा वा केइपुरिसे' तद् यथा वा कश्चित् पुरुषः 'सुक्कं तणहत्थयं' शुष्कं तृणहस्तकम् पुलिकम् 'जायतेयंसि पक्खिवेज्जा' जाततेजसि अग्नौ प्रक्षिपेत् 'एवं जहा छट्ठसए तहा अयोकवल्ले वि' एवं यथा षष्ठशतके तथा अयस्कपालेऽपि, षष्ठ-

"सिढिलीकयाइं" मन्दविपाक वाले किए जाकर "णिट्ठियाइं कयाइं" सत्ताविहीन किये जाकर "विप्परिणामियाइं" स्थितिघात, रसघात आदि द्वारा विपरिणाम को प्राप्त किये जाकर "खिप्पामेव परिविद्धत्थाइं भवंति" शीघ्र ही नष्ट कर दिये जाते हैं। "जावइयं तावइयं जाव महापज्जवसाणा भवंति" इसलिये वे श्रमण निर्ग्रन्थ भले ही चाहे जितनी मन्दवेदना का अनुभव करें तब भी महानिर्जरावाले होते हैं। पुनः दृष्टान्तान्तर से प्रकृतविषय को पुष्ट करने के लिए सूत्रकार कहते हैं-"सुक्कं तणहत्थयं" जैसे कोई पुरुष शुष्क घास के पूरा को "जायतेयंसि पक्खिवेज्जा" अग्नि में डाल देता है "एवं जहा छट्ठसए तहा अयकवल्लो वि' छठवें शतक के प्रथम उद्देशक में कहा गया है उसके अनुसार वह शीघ्र जल जाती है-इसी प्रकार से श्रमणनिर्ग्रन्थों के

વિપાકવાળા કરાઈને "णिट्ठियाइं कयाइं" સત્તા વગરના કરાઈને "विप्परिणामियाइं" સ્થિતિ ઘાત રસઘાત વિગેરેથી પરિણામિત કરાયેલા "खिप्पामेव परिविद्धत्थाइ भवंति" જલદી જ નાશ કરાય છે. "जावइयं तावइयं जाव महापज्जवसाणा भवंति" તેથી એ શ્રમણ નિર્ગ્રંથ ચાહે તેટલી મંદ વેદનાનો અનુભવ કરતા હોય તો પણ મહાનિર્જરાવાળા હોય છે.

શ્રમણ ભગવાન આ વિષયને વધારે સ્પષ્ટ કરવા માટે બીજું દૃષ્ટાંત આપતાં કહે છે કે "सुक्कं तणह" ... કોઈ પુરુષ સુકા ઘાસના પુળાને "जायतेयंसि पक्खिवेज्जा" અગ્નિ ... एवं जहा छट्ठसए तहा अयकवल्लो" જેમ છઠ્ઠા શતકના પ ... કહેવામાં આવ્યું છે તે

शतकीयप्रथमोद्देशकवृत्तान्तस्तु इत्थम् 'से णूणं गोयमा! से सुक्के तणहत्थए जायतेयंसि पक्खित्ते समाणे खिप्पामेव मसमसाविज्जइ हंता मसमसाविज्जइ, एवामेव गोयमा! समणाणं णिग्गंथाणं अहाबायराइं कम्माइं जाव महापज्जवसाणा भवंति, से जहा णामए केइ पुरिसे तत्तंसि अयकवल्लंसि उदगबिंदुं जाव हंता विद्धंसमागच्छइ एवामेव गोयमा! समणाणं णिग्गंथाणं अहाबायराइं कम्माइं विद्धंसमागच्छइ' तद् नूनं गौतम! स शुष्कस्तृणहस्तको जाततेजसि प्रक्षिप्तः सन् क्षिप्रमेव मसमसाप्यते, हन्त मसमसाप्यते एवमेव गौतम! श्रमणानां निर्ग्रन्थानां यथा बादराणि कर्माणि यावद् महापर्यवसाना भवन्ति तद्यथानामकः कश्चित् पुरुषः तप्तेऽयःकपाले उदकबिन्दुं यावत् हन्त विध्वंसमागच्छति, एवमेव गौतम! श्रमणानां निर्ग्रन्थानां यथा बादराणि कर्माणि विध्वंसमागच्छन्ति। एतत्पर्यन्तं षष्ठशतकीयप्रथमोद्देशकप्रकरणं तदिहानुसन्धेयम्, जाव महापज्जवसाणा भवंति' यावद् महापर्यवसानाः भवन्ति, अत्र यावत् षष्ठशतकीयप्रथमोद्देशकप्रकरणं पूर्वं प्रदर्शितमेव। 'से तेणट्ठेणं गोयमा!' तत्तेनार्थेन गौतम!

---

यथाबादर कर्म शीघ्र ही नष्ट हो जाते हैं-छठवें शतक के प्रथम उद्देशे में कहा गया विषय इस प्रकार से है-"से णूणं गोयमा! से सुक्के तणहत्थए जायतेयंसि पक्खित्ते समाणे खिप्पामेव मसमसाविज्जइ एवामेव गोयमा! समणाणं निग्गंथाणं जहाबायराइं कम्माइं जाव महापज्जवसाणा भवंति" से जहाणामए केई पुरिसे तत्तंसि अयकवल्लंसि उदगबिन्दुं जाव हंता विद्धंसमागच्छइ, एवामेव गोयमा! समणाणं णिग्गंथाणं जहाबायराइं कम्माइं विद्धंसमागच्छइ' इस पाठ का अर्थ स्पष्ट है, इस पाठ तक छठे शतक के प्रथम उद्देशक का कथन यहां पर ग्रहण कर लेना चाहिये "से तेणट्ठेणं गोयमा! एवं वुच्चइ" इस कारण

---

घासनो ते पूळो जलदी बळी जाय छे. तेज प्रमाणे श्रमण निर्ग्रंथोना यथा बादर कर्मो जलदी नाश पामे छे. छठ्ठा शतकना पहेला उद्देशामां कहेल विषय आ प्रमाणे छे. "से णूणं गोयमा! से सुक्के तणहत्थए जायतेयंसि पक्खित्ते समाणे खिप्पामेव मसमसाविज्जइ, एवामेव गोयमा! समणाणं निग्गंथाणं जहा बायराइं कम्माइं जाव महापज्जवसाणा भवंति से जहाणामए केइ पुरिसे तत्तंसि अयकवल्लंसि उदगबिंदुं जाव हंता विद्धंसमागच्छइ एवामेव गोयमा! समणाणं णिग्गंथाणं जहाबायराइं कम्माइं विद्धंसमागच्छइ" आ पाठनो अर्थ स्पष्ट छे. आ पाठ सुधि छठ्ठा शतकना पहेला उद्देशानुं कथन अहिंया समजी लेवुं. "से तेणट्ठेण गोयमा! एवं वुचइ" ते कारणे हे गौतम! में एवुं कह्युं छे के

'एवं वुच्चइ' एवमुच्यते 'जावइयं अन्नगिलायए समणे णिग्गंथे कम्मं णिज्जरेइ' यावत्कम् अन्नग्लायकः श्रमणो निर्ग्रन्थः कर्म निर्जरयति, तंचेव जाव वासकोडाकोडीए वा नो खवयंति' तदेव यावत् वर्षकोटिकोटया वा नो क्षपयन्ति नारकाः अत्र यावत्पदेन 'एवइयं कम्मं नेरइएसु नेरइया' इत्यारभ्य 'वासकोडीए वा वासकोडीहिं वा' इत्यन्तः सर्वोऽपि प्रश्नग्रन्थो ग्राह्यः 'सेवं भंते ! सेवं भंते ! त्ति जाव विहरइ' तदेवं भदन्त ! २ इति यावद् विहरति, हे भदन्त ! यद् देवानुप्रियेण कर्मक्षपणविषये श्रमणनारकयोर्भेदः सयुक्तिकः कथितः इति तत्सर्वमपि

---

हे गौतम ! मैंने ऐसा कहा है कि "जावइयं अन्नगलायए समणे णिग्गंथे कम्म निज्जरेइ' जितने कर्मों की निर्जरा अन्नग्लायक-नित्य भोजी साधु-श्रमण निर्ग्रन्थ एकदिवस में करता है "तं चेव जाव वास-कोडाकोडीए वा नो खवयंति" उतने कर्मों की निर्जरा यावत् कोटाकोटी वर्षों तक भी नरक के नैरयिक जीव नहीं कर सकते हैं। यहां याव-त्पद से "एवइयं कम्मं णेरइएसु नेरइया" यहां से लगाकर "वासकोडीए वा वासकोडीहिं वा" यहां तक का सर्वप्रश्नग्रन्थ ग्रहण कर लेना चाहिये "सेवं भंते ! सेवं भंते ! त्ति जाव विहरइ" हे भदन्त ! आप देवानुप्रिय ने जो यह कर्मक्षपण के विषय में श्रमणनारक का भेद

---

"जावइयं अन्नगिलायए समणे निग्गंथे कम्मं निज्जरेइ" જેટલા કર્મોની નિર્જરા અન્નગ્લાયક નિત્ય ભોજી સાધુ-શ્રમણ નિર્ગ્રંથ કરે છે. "तंचेव जाव वास कोडीए वा नो खवयंति" એટલા કર્મોની નિર્જરા નર્કમાં રહેલ નારક જીવ કોટાકોટી વર્ષો સુધીમાં પણ કરી શકતા નથી અહિંયા યાવત્ પદથી "एव-इयं कम्मं नेरइएसु नेरइया" અહિંથી લઈને "वासकोडीए वा वासकोडीहिं वा" અહિ સુધીનો સઘળો જ પ્રશ્નોત્તર રૂપ ગ્રંથ ગ્રહણ થયેલ છે તે સમજી લેવો. "सेवं भंते ! सेवं भंते ! त्ति जाव विहरइ" હે ભગવન્ ! આપ દેવાનુ-પ્રિયે ! આ કર્મ ક્ષપણના વિષયમાં શ્રમણ અને નારકનો ભેદ યુકિત સહિત કહ્યો છે. તે સઘળું કથન સત્ય જ છે. આ પ્રમાણે કહિને તે ગૌતમ પ્રભુને

एवमेव सयुक्तिकं सत्यमेव, इति उक्त्वा गौतमो भगवन्तं वन्दते, नमस्यति, वन्दित्वा नमस्यित्वा संयमेन तपसा आत्मानं भावयन् विहरति ॥सू० १ ॥

॥ इति श्री विश्वविख्यात–जगद्वल्लभ–प्रसिद्धवाचक–पञ्चदशभाषा-
कलितललितकलापालापकप्रविशुद्धगद्यपद्यनैकग्रन्थनिर्मापक,
वादिमानमर्दक–श्रीशाहूछत्रपति कोल्हापुरराजप्रदत्त–
'जैनाचार्य' पदभूषित—कोल्हापुरराजगुरु–
बालब्रह्मचारि—जैनाचार्य—जैनधर्मदिवाकर
–पूज्य श्री घासीलालव्रतिविरचितायां
श्री "भगवतीसूत्रस्य" प्रमेयचन्द्रिका-
ख्यायां व्याख्यायां षोडशशतके
तृतीयोद्देशकः समाप्तः ॥१६–३॥

---

सयुक्तिक कहा है वह सब सयुक्तिक है–सत्य ही–है इस प्रकार कहकर वे गौतम प्रभु को वन्दना एवं नमस्कार कर संयम और तप से आत्मा को भावित करते हुए अपने स्थान पर विराजमान हो गये ॥सू. १॥

जैनाचार्य जैनधर्मदिवाकर पूज्यश्री घासीलालजी महाराजकृत
"भगवतीसूत्र" की प्रमेयचन्द्रिका व्याख्याके सोलहवें शतक का
तीसरा उद्देशक समाप्त ॥१६–३॥

---

વંદના અને નમસ્કાર કરીને સંયમ અને તપથી આત્માને ભાવિત કરતાં કરતાં પોતાના સ્થાન પર બિરાજમાન થઈ ગયા. ॥સૂ૦૧॥

જૈનાચાર્ય જૈનધર્મ દિવાકર પૂજ્યશ્રી ઘાસીલાલજી મહારાજ કૃત "ભગવતીસૂત્ર"ની પ્રમેયચન્દ્રિકા વ્યાખ્યાના સોળમા શતકનો ત્રીજો ઉદ્દેશો સમાપ્ત ॥૧૬–૩॥



अथ षोडशशतके पञ्चमोद्देशकः प्रारभ्यते ।

चतुर्थोद्देशके कर्मनिर्जरणशक्तिस्वरूपं कथितं पञ्चमेतु देवानामागमनादि शक्तिस्वरूपं कथ्यते अनेन संबन्धेन आयातस्यास्य पञ्चमोद्देशकस्येदमादिमं सूत्रम् 'तेणं कालेणं' इत्यादि ।

मूलम्--तेणं कालेणं तेणं समएणं उल्लुयतीरे नामं नयरे होत्था, वण्णओ एगजंबूए चेइए, वन्नओ तेणं कालेणं तेणं समएणं सामी समोसढे। जाव परिसा पज्जुवासइ, तेणं कालेणं तेणं समएणं सक्के देविंदे देवराया वज्जपाणी, एवं जहेव बितिय उद्देसए तहेव दिव्वेणं जाणविमाणेणं आगओ जाव जेणेव समणे भगवं महावीरे तेणेव उवागच्छइ उवागच्छित्ता जाव नमंसित्ता एवं वयासी, देवे णं भंते! महिड्ढिए जाव महासोक्खे बाहिरए पोग्गले अपरियाइत्ता पभू आगमित्तए १ नो इणट्ठे समट्ठे? देवे णं भंते! महड्ढिए जाव महासोक्खे बाहिरए पोग्गले परियाइत्ता पभु आगमित्तए? हंता, पभु देवे णं भंते! महिड्ढिए जाव महासोक्खे० एवं एएणं अभिलावेणं गमित्तए २, एवं भासित्तए वागरित्तए वा ३, उम्मिसावेत्तए वा निमिसावेत्तए वा ४, आउट्टावेत्तए वा पसारेत्तए वा ५ ठाणं वा सेज्जं वा निसीहियं वा चेइत्तए वा ६ एवं विउव्वित्तए वा ७ एवं परियारावेत्तए वा ८ जाव हन्ता पभू इमाइं अट्ठउक्खित्तपसिणवागरणाइं पुच्छइ पुच्छित्ता संभंतियवंदणएणं वंदइ वंदित्ता तमेव दिव्वं जाणविमाणं दुरूहइ दुरुहित्ता जामेव दिसं पाउब्भूए तामेव दिसं पडिगए॥सू० १॥

छाया—तस्मिन् काले तस्मिन समये उल्लूकतीरं नाम नगरमासीत्, वर्णकः एकजम्बूक चैत्यम् वर्णकः। तस्मिन् काले तस्मिन् समये स्वामी समवसृतः यावत् परिषत् पर्युपास्ते, तस्मिन् काले तस्मिन् समये शक्रो देवेन्द्रो देवराजो वज्रपाणिः एवं यथैव द्वितीयोद्देशके तथैव दिव्येन यानविमानेन आगतः यावत् यत्रैव श्रमणो भगवान् महावीरस्तत्रैवोपागच्छति, उपागत्य यावत् नमस्थित्वा एवम् अवादीत्-देवः खलु भदन्त ! महर्द्धिको यावत् महासौख्यः बाह्यान् पुद्गलान् अपर्यादाय प्रभुरागन्तुम् ? नाऽयमर्थः समर्थः। देवः खलु भदन्त ! महर्द्धिको यावद् महासौख्यो बाह्यान् पुद्गलान् पर्यादाय प्रभुः आगन्तुम् ? हंत प्रभुः। देवः खलु भदन्त ! महर्द्धिको यावद् महासौख्यः, एवम् एतेन अभिलापेन गन्तुम् २, एवम् अनेन अभिलापेन भाषितुं वा ३ उन्मिषितुं वा निमिषितुं वा ४ आकुण्टयितुं वा प्रसारयितुं वा ५, स्थानं वा शय्यां वा निषद्यां वा, चेतयितुं वा ६ एवं विकुर्वितुं वा ७ एवं परिचारयितुं ८ यावत् हन्त प्रभुः इमानि अष्ट उत्क्षिप्तप्रश्नव्याकरणादि पृच्छति पृष्ट्वा संभ्रान्तिकवन्दनकेन वन्दति वन्दित्वा तमेव दिव्यं यानविमानम् अधिरोहति अधिरुह्य यामेव दिशं प्रादुरभूत् तामेव दिशं प्रतिगतः ॥ सू० १ ॥

टीका—'तेणं कालेणं तेणं समएणं' तस्मिन् काले तस्मिन् समये 'उल्लुयतीरे नामं नगरे होत्था' उल्लुकतीरं नाम नगरमासीत् 'वण्णओ' वर्णकः चम्पा-

---

पांचवें उद्देशे का प्रारम्भ—

चतुर्थ उद्देशे में कर्मों की निर्जरणशक्ति का स्वरूप कहा गया है अब इस पंचम उद्देशे में देवों की आगमनादि शक्ति का स्वरूप कहना है, इसलिये इस पंचम उद्देशा का प्रारम्भ किया गया है—"तेणं कालेणं तेणं समएणं" इत्यादि सूत्र इसका सर्वप्रथम सूत्र है—

"तेणं कालेणं तेणं समएणं" इत्यादि।

टीकार्थ—"तस्मिन् काले तस्मिन् समये" उस काल और उस समय में "उल्लुयतीरे नामं नयरे होत्था" उल्लुकतीर नाम का नगर

---

પાંચમા ઉદ્દેશાનો પ્રારંભ—

ચોથા ઉદ્દેશામાં કર્મોની નિર્જરા કરવાની શક્તિનું સ્વરૂપ કહેવામાં આવ્યું છે. હવે આ પાંચમાં ઉદ્દેશામાં દેવોના આગમન વગેરે શક્તિના સ્વરૂપનું વર્ણન કરવામાં આવશે તેથી આ પાંચમાં ઉદ્દેશાનો પ્રારંભ કરવામાં આવે છે. તેનું પહેલું સૂત્ર આ પ્રમાણે છે "तेणं कालेणं तेणं समएणं" ઇત્યાદિ—

ટીકાર્થ—"तस्मिन् काले तस्मिन् समये" તે કાળે અને તે સમયે "उल्लुयतीरे नामं नयरे होत्था" ઉલ્લૂકતીર નામનું નગર હતું. "वण्णओ"

नगरीवर्णनवत् अस्य उल्लुकतीरनगरस्यापि वर्णनं कर्त्तव्यम् । 'एगजंबूए चेइए' एकजम्बूकं चैत्यम् 'वण्णओ' वर्णकः, अस्य वर्णनं पूर्णभद्रचैत्यवद् विज्ञेयम् । 'तेणं कालेणं तेणं समएणं' तस्मिन् काले तस्मिन् समये 'सामीसमोसढे' स्वामी-महावीरस्वामी तीर्थङ्करः संप्राप्तकेवलज्ञानदर्शनचारित्रधरः समवसृतः 'जाव परिसा पज्जुवासइ' यावत् परिषद् पर्युपास्ते भगवत आगमनं ज्ञात्वा उल्लूकतीरनगरतो बहवः समागता भगवन्तं वन्दितुं तदीयवचनामृतं पातुं महती सभा संवृत्ता, तस्यां च सभायां सर्वान् लक्षीकृत्य भगवता धर्मोपदेशो दत्तः, दत्ते च परिषत् नमस्यति पर्युपास्ते च, इत्यादि सर्वोऽपि वृत्तान्तो यावत् पदग्राह्यो भवतीति 'तेणं कालेणं तेणं समएणं' तस्मिन् काले तस्मिन् समये परिषद् विद्यमान

---

था "वण्णओ" इसका वर्णन औपपातिक सूत्र में वर्णित चंपा नगरी के समान जानना चाहिये । "एगजंबूए चेइए" इसमें एक जम्बूक नाम का चैत्य था "वण्णओ" इसका वर्णन भी पूर्णभद्र चैत्य की तरह से जानना चाहिये "तेणं कालेणं तेणं समएणं" उस काल और उस समय में "सामी समोसढे" तीर्थंकर महावीर स्वामी वहां पधारे थे प्राप्त हुए केवलज्ञान से, केवलदर्शन से और चारित्र से युक्त थे "जाव परिसा पज्जुवासइ" भगवान् का आगमन सुनकर उल्लुकतीर नगर से अनेकजन भगवान् को वन्दना करने के लिये और उनसे धर्मोपदेश सुनने के लिये परिषदा के रूप में उनके पास आए प्रभु ने आगत परिषदा को धर्मोपदेश दिया, धर्मोपदेश हो चुकने पर परिषदा ने प्रभु को वन्दना की नमस्कार किया, इत्यादि समस्तवृत्तान्त यावत्पद से

---

તેનું વર્ણન ઔપપાતિક સૂત્રમાં વર્ણવેલી ચંપાનગરી પ્રમાણે સમજી લેવું. "एगजंबूए चेइए" તેમાં એક જંબૂક નામનું ચૈત્ય (ઉદ્યાન) હતું. "वण्णओ" તેનું વર્ણન પણ પૂર્ણભદ્ર ચૈત્ય (ઉદ્યાન)ની માફક સમજી લેવું. "तेणं कालेणं तेणं समएणं" તે કાળે અને તે સમયે "सामी समोसढे" તીર્થંકર મહાવીર સ્વામી ત્યાં પધાર્યા તેઓએ કેવળજ્ઞાન અને કેવળદર્શન મેળવ્યા હતા. અને ચારિત્રથી તેઓ યુક્ત હતા. "जाव परिसा पज्जुवासइ" ભગવાનનું આગમન સાંભળીને ઉલ્લૂકતીર નગરની પરિષદ ભગવાનને વંદના કરવા માટે અને તેમની પાસે ધર્મદેશના સાંભળવા માટે તેમની પાસે આવી. પ્રભુએ આવેલ પરિષદને ધર્મદેશના આપી ધર્મદેશના સાંભળીને પરિષદાએ પ્રભુને વંદના કરી નમસ્કાર કર્યા વંદના નમસ્કાર કરીને પરિષદ પોતપોતાને સ્થાને પાછી ગઇ. ઈત્યાદિ સઘળું વૃતાંત્ત યાવત્ શબ્દથી અહિં ગ્રહણ થયું

समये 'सक्के देविंदे देवराया वज्जपाणी' शक्रो देवेन्द्रो देवराजो वज्रपाणिः, 'एवं जहेव बितिए उद्देसए तहेव' एवं यथैव द्वितीयोद्देशके तथैव अत्रैव शतके इदमीयद्वितीयोद्देशके यथा शक्रस्य विकुर्वणां विमानानि वर्णनमुपवर्णितं तथैव सर्वमपि प्रकरणमत्र विज्ञेयम् 'दिव्वेणं जाणविमाणेणं आगओ' दिव्येन यानविमानेन आगतः दिव्यम्-अतिविलक्षणं च तद् यानविमानमिति दिव्ययानविमानं तादृशं विमानमारुह्य भगवत्समीपमागतः 'जाव जेणेव समणे भगवं महावीरे तेणेव उवागच्छइ' यावद् यत्रैव श्रमणो भगवान् महावीरस्तत्रैव उपागच्छति, अत्र यावत्पदेन 'उवागच्छित्ता' इत्यस्य संग्रहो भवति उपागत्य 'जाव नमंसित्ता एवं

यहां ग्रहण हुआ है "तेणं कालेणं तेणं समएणं" उस काल और उस समय में जब कि परिषदा मौजूद थी "सक्के देविंदे देवराया वज्जपाणि" वज्रपाणि वाला देवेन्द्र देवराज, शक्र उनके पास आया "एवं जहेव बितिए उद्देसए तहेव" इसी सोलहवें शतक के दूसरे उद्देशक में जैसा शक्र के संबन्ध में विकुर्वणा विमान आदि का वर्णन किया गया है वही सब वर्णन यहां पर भी कर लेना चाहिये "दिव्वेण जाणविमाणेणं आगओ" देवेन्द्र देवराज शक्र उनके पास दिव्य यान विमान पर चढकर आया वह विमान अति श्लक्षण था यह बात दिव्य पद से प्रकट की गई है। "जाव जेणेव समणे भगवं महावीरे तेणेव उवागच्छइ" इस प्रकार वह शक्र जहां श्रमण भगवान् महावीर विराजमान थे-वहां पर आ पहुंचा, यहां यावत्पद से "उवागच्छित्ता" इस पद का संग्रह हुआ है। वहां आकरके 'जाव नमंसित्ता एवं वयासी' उसने

છે. "तेणं कालेणं तेणं समएणं" તે કાળે અને તે સમયે "सक्के देविंदे देवराया वज्जपाणि" વજ્ર જેના હાથમાં છે. એવો દેવેન્દ્ર દેવરાજ શક્ર (ઈન્દ્ર) તેમની પાસે આવ્યો. "एवं जहेव बितिए उद्देसए तहेव" જેવી રીતે આ સોળમાં શતકના બીજા ઉદ્દેશામાં શક્રના સંબંધમાં 'વિકુર્વણા' 'વિમાન' વિગેરેનું વર્ણન કરવામાં આવ્યું છે તેવી રીતનું સઘળુ વર્ણન અહિં સમજી લેવું. "दिव्वेण जाणविमाणेणं आगओ" દેવેન્દ્ર દેવરાજ શક્ર (ઈન્દ્ર) 'દિવ્ય યાનવિમાનમાં ચઢીને પ્રભુની પાસે આવ્યો આ વિમાન અત્યંત વિલક્ષણ હતું એ વાત 'દિવ્ય' એ પદથી પ્રગટ થાય છે. "जाव जेणेव समणे भगवं महावीरे तेणेव उवागच्छइ" આ રીતે તે શક્ર (ઇન્દ્ર) જ્યાં શ્રમણ ભગવાન્ મહાવીર વીરાજમાન હતા ત્યાં પહોંચ્યો અહિં યાવત્ પદથી "उवागच्छित्ता" એ પદનો સંગ્રહ થયો છે ત્યાં આવીને "जाव नमंसित्ता

वयासी' यावद् नमस्यित्वा एवमवादीत्, अत्र यावत्पदेन वन्दते नमस्यति वन्दित्वा, एतेषां ग्रहणं भवतीति । शक्रो भगवत्सकाशमागत्य किमुक्तवान् ? तत्राह–'देवे णं' इत्यादि 'देवे णं भंते !' देवः खलु भदन्त ! 'महड्ढिए जाव महासोक्खे' महर्द्धिको यावद् महासौख्यः अत्र यावत्पदेन 'महज्जुइए महब्बले महाजसे' एतेषां ग्रहणम् 'बाहिरए पोग्गले अपरियाइत्ता पभू आगमित्तए' बाह्यान् पुद्गलान् अपर्यादाय प्रभु रागन्तुमिति प्रश्नः ? यद्यपि सर्वेऽपि प्राणिनः बाह्यान् पुद्गलान् अनादाय न कामपि क्रियां कर्तुं शक्नुवन्ति, इति सर्वानुभवसिद्धम्, तथापि देवस्य महर्द्धिकत्वात् बाह्यपुद्गलान् अपरिगृह्यापि कदाचिदागमनं संभवेदिति संभावनया शक्रस्य प्रश्नः ।

प्रभुको नमस्कार कर इस प्रकार से पूछा यहां पर यावत्पद से 'वंदइ णमंसइ वंदित्ता इन पदों का संग्रह हुआ है। शक्र ने प्रभु के पास आकर क्या पूछा अब इसे ही यहां से प्रकट किया जाता है–'देवे णं भंते! महिड्ढिए जाव महासोक्खे' हे भदन्त! जो देव परिवार आदिरूप ऋद्धि विशिष्ट है एवं महासुख संपन्न है तथा यावत्पद ग्राह्य–'महज्जुइए, महब्बले, महाजसे' महानुभाववाला है महाद्युतिवाला है महाबलवाला है, और महायशवाला है, वह 'बाहिरए पोग्गले अपरियाइत्ता' बाहर के पुद्गलों को विना ग्रहण किये क्या आने के लिये समर्थ है ? यद्यपि समस्त प्राणी बाह्य पुद्गलों को विना ग्रहण किये किसी भी क्रिया को करने के लिये समर्थ नहीं हो सकते हैं यह अनुभव सिद्ध बात है फिर भी देव महर्द्धिक होने से बाह्यपुद्गलों को ग्रहण किये विनाही कदाचित् आगमनरूप क्रिया को कर सकता हो ? इस संभावना से शक्र ने

"एवं वयासी" તેણે પ્રભુને નમસ્કાર કરીને આ પ્રમાણે પૂછયું અહિંયા યાવત્ પદથી "वंदते नमंसति वंदित्वा" વંદના કરી આ પદનો સંગ્રહ થયો છે. શક્રે પ્રભુની પાસે આવીને શું પૂછયું તે વાત હવે પ્રગટ કરવામાં આવે છે. "देवे णं भंते! महिड्ढिए जाव महासोक्खे" હે ભગવન્! જે દેવ પરિવાર વિગેરે ઋદ્ધિવાળો છે. તેમજ ઘણા સુખવાળો છે અહિંયા યાવત્ પદથી "महज्जुइए महब्बले महाजसे" મહાદ્યુતિવાળા, મહાબળવાળા અને મહાશયવાળા એ પદોનો સંગ્રહ થયો છે. આ વિશેષણોવાળો તે દેવ "बाहिरए पोग्गले अपरियाइत्ता" બહારના પુદ્ગલો ગ્રહણ કર્યા સિવાય આવી શકે છે? જોકે સઘળા પ્રાણી બહાર પુદ્ગલો ગ્રહણ કર્યા સિવાય કોઇ પણ ક્રિયા કરવાને સમર્થ થઇ શકતા નથી, આ અનુભવ સિદ્ધ વાત છે. તો પણ દેવ મહર્દ્ધિક હોવાથી બાહ્ય પુદ્ગલોને ગ્રહણ કર્યા સિવાય કદાચ આગમન રૂપ ક્રિયા કરી શકતા હોય આ સંભાવનાથી શક્રે આ પ્રશ્ન કર્યો છે. તેના ઉત્તરમાં પ્રભુ કહે છે કે

भगवानाह-'नो इणट्ठे' इत्यादि 'नो इणट्ठे समट्ठे' नायमर्थः समर्थः, नहि कोऽपि देवः, बाह्यपुद्गलान्, अनादाय आगमनादिकं कर्तुं शक्नोतीति। 'देवे णं भंते! देवः खलु भदन्त! 'महड्ढिए जाव महासोक्खे' महर्द्धिको यावद् महासौख्यः, 'बाहिरए पोग्गले परियाइत्ता पभू आगमित्तए' बाह्यान् पुद्गलान् पर्यादाय प्रभुः आगन्तुम् बाह्यपुद्गलान् आदाय आगमने समर्थः किमिति प्रश्नः। भगवानाह-'हंता पभू' हन्त प्रभूः समर्थः शक्नोत्येव बाह्यपुद्गलानादाय आगमनादिव्यवहारं कर्त्तुमित्यर्थः, इति प्रथमप्रश्नः सम्प्रति अष्टप्रश्नान्तर्गतशेषप्रश्नान् भगवन्तं पृच्छति 'देवे णं भंते!' देवः खलु भदन्त! 'महड्ढिए जाव महासोक्खे' महर्द्धिको यावद् महासौख्यः 'एवं एएणं अभिलावेणं गमित्तए' एवम्, अनेन, अभिलापेन

ऐसा यह प्रश्न किया है। इसके उत्तर में प्रभु कहते हैं-'नो इणट्ठे समट्ठे' हे शक्र! यह अर्थ समर्थ नहीं है। अर्थात् कोई भी देव बाह्य पुद्गलों को ग्रहण किये विना आगमनादि क्रियाको नहीं कर सकता है। अब गौतम प्रभु से ऐसा पूछते हैं-'देवे णं भंते! महड्ढिए जाव महासोक्खे' हे भदन्त! महर्द्धिक यावत् महासुख युक्त देव 'बाहिरए पोग्गले परियाइत्ता पभू आगमित्तए' बाहर के पुद्गलों को ग्रहण करके क्या आगमनादिरूप क्रिया कर सकता है? इसके उत्तर में प्रभु कहते हैं-'हंता, पभू' हां शक्र! ऐसा वह कर सकता है। अर्थात् बाह्य पुद्गलों को ग्रहण करके देव आगमनादिव्यवहार करने के लिये समर्थ हो सकता है यह प्रथम प्रश्न का उत्तर है। अब अष्ट प्रश्नान्तर्गत शेष प्रश्नों को वह भगवान् से पूछता है-'देवे णं भंते! महड्ढिए जाव महासोक्खे' हे भदन्त! जो महर्द्धिक यावत् महासुखसंपन्न देव है वह 'एवं एएणं अभिलावेणं गमित्तए' इसी अभिलापके अनुसार क्या

"णो इणट्ठे समट्ठे" હે શક્ર આ અર્થ બરોબર નથી અર્થાત્ કોઈ પણ દેવ બાહ્ય પુદ્ગલોને ગ્રહણ કર્યા સિવાય આગમન વિગેરે ક્રિયા કરી શકતો નથી હવે ગૌતમ સ્વામી પ્રભુને એ પ્રમાણે પૂછે છે કે "देवे णं भंते! महड्ढिए जाव महासोक्खे" હે ભગવન્! મહાઋદ્ધિવાળો યાવત્ મહાસુખવાળો દેવ "बाहिरए पोग्गले परियाइत्ता पभू आगमित्तए" બહારના પુદ્ગલોને ગ્રહણ કરીને આગમન ક્રિયા કરી શકે છે? તેના ઉત્તરમાં પ્રભુ કહે છે કે "हंता पभू" હા, શક્ર એવું તે કરી શકે છે. અર્થાત્ બાહ્ય પુદ્ગલોને ગ્રહણ કરીને દેવ આગમન વિગેરે વ્યવહાર કરવામાં સમર્થ છે. આ પહેલા પ્રશ્નનો ઉત્તર છે હવે આઠ પ્રશ્નાન્તર ગત બાકીના પ્રશ્નો તે ભગવાનને પૂછે છે. "देवे णं भंते! महड्ढिए जाव महासोक्खे" હે ભગવન્! જે મહર્ધિક યાવત્ મહાસુખવાળો દેવ છે. "एवं एएणं अभिलावेणं गमित्तए" આ અભિલાપ પ્રમાણે શું જવાને

गंतुम् देवः खलु भदन्त ! महर्द्धिको यावद् महासौख्यः बाह्यान् पुद्गलान् अपरिगृह्य गन्तुं शक्नोति किम् ? 'एवं भासित्तए वा, वागरित्तए वा' एवं भाषितुं वा व्याकर्तुं वा तत्र भाषितुं-वक्तुं व्याकर्तुम्-उत्तरं दातुमित्यनयोर्भाषणव्याकरणयो र्भेद इति, तथा च बाह्यपुद्गलान्, आदाय भाषणं कर्त्तुम्, उत्तरं दातुं च समर्थः किम् देवो भवतीति ३। 'उम्मिसावेत्तए वा, निम्मिसावेत्तए वा' उन्मिषितुं वा निमिषितुं वा हे भदन्त ! देवो बाह्यपुद्गलान् आदाय उन्मेषनिमेषव्यापारकरणे प्रभुः किम् एवमनादायापीति प्रश्नः ४ 'आउंटावेत्तए वा पसारएत्तए वा' आकुंचयितुं वा प्रसारयितुं वा शरीरावयवानां संकोचनप्रसारणक्रियां बाह्यपुद्गलान् उपादायानुपादाय वा कर्त्तुं समर्थः किमिति प्रश्नः 'ठाणं वा, सेज्जं वा, निसीहियं वा, चेइत्तए वा' स्थानं वा, शय्यां वा, निषद्यां स्वाध्यायभूमिं वा चेतयितुं वा कर्त्तुमित्यर्थः स्थानशय्यादीनामुपभोगाय समर्थो देवः किमिति। 'एवं विउव्वित्तए वा' एवं विकुर्वितुं वा समर्थः किम् 'एवं परियारावेत्तए वा' एवं परिचार-

---

जाने के लिये समर्थ है-अर्थात् ऐसा देव बाहर के पुद्गलों को बिना ग्रहण किये क्या गमन करने के लिये समर्थ हो सकता है ? 'एवं भासित्तए वा, वागरित्तए वा' इसी प्रकार से क्या वह देव बाह्य पुद्गलों को ग्रहण किये बिना बोलने के लिये, उत्तर देने के लिये समर्थ हो सकता है, उम्मिसावेत्तए वा, निम्मिसावेत्तए वा आउंटावेत्तए वा, पसारएत्तए वा' उन्मेष निमेषरूप व्यापार करने में समर्थ हो सकता है क्या ? शरीरावयवों के संकोच करने में या उनके प्रसारण करने में समर्थ हो सकता है क्या ? 'ठाणं वा सेज्जं वा निसीहियं वा, चेइत्तए वा' स्थान, शय्या, स्वाध्यायभूमि इनके उपभोग करने के लिये समर्थ हो सकता है क्या ? इसी प्रकार से वह 'विउव्वित्तए' क्या विकुर्वणा करने के लिये समर्थ हो सकता है ? 'एवं परियारावेत्तए वा' विषयभोगों को

---

સમર્થ થાય છે. અર્થાત્ એવો દેવ બહારના પુદ્ગલોને ગ્રહણ કર્યા સિવાય શું ગમન કરી શકે છે ? "एव भासित्तए वा वागरित्तए वा" એજ રીતે તે દેવ બાહ્ય પુદ્ગલોને ગ્રહણ કર્યા સિવાય શું બોલી શકે છે કે ઉત્તર દઈ શકે છે ? "उम्मिसावेत्तए वा, निम्मिसावेत्तए वा, आउंटावेत्तए वा, पसारएत्तए वा," ઉન્મેષ નિમેષરૂપ (ઉઘાડવું બંધ કરવું) વ્યાપાર કરી શકે છે ? શરીરના અવયવોના સંકોચ કરવામાં અગર તેના ફેલાવવામાંની ક્રિયા કરવા સમર્થ થઈ શકે છે ? "ठाणं वा सेज्जं वा, निसीहियं वा, चेइत्तए वा" સ્થાન શય્યા સ્વાધ્યાયભૂમિના ઉપભોગ કરવામાં સમર્થ થઈ શકે છે ? એજ રીતે તે "विउव्वित्तए" શું વિકુર્વણા કરી શકે છે. "एवं परियारावेत्तएवा" વિષય ભોગો

यितुं वा-परिचारणं-विषयोपभोगः, एतादृशपरिचारणकरणे समर्थः किम् ८ कियत्पर्यन्तमेतद् वक्तव्यं तत्राह-'जाव हंता पभू' यावद् हन्त! प्रभुः, यावत्पदेन आगमनादारम्य परिचारणपर्यन्तम् अष्टसु प्रश्नेषु अनादाया प्रभुः आदाय प्रभु-रित्यन्तेन सर्वं ग्राह्यम् देवोहि बाह्यपुद्गलान् आदाय, आगमनगमनादारम्य परिचारणान्तक्रियां कर्तुं समर्थः किम्? इत्येवमष्टप्रश्नाः शक्रस्य। तत्र आगमन-विषयकः प्रथमः प्रश्नः, गमनविषयको द्वितीयः २, भाषणव्याकरणयोस्तृतीयः ३, उन्मेषनिमेषविषयकश्चतुर्थः ४, आकुञ्चनप्रसारणविषयकः पञ्चमः ५, स्थानादिविषयकः षष्ठः ६, विकुर्वणाविषयकः सप्तमः ७' परिचारणाविषयको-ऽष्टमः ८,। इत्येवं मिलित्वा अष्टौ प्रश्नाः शक्रस्य भवन्तीति। एतादृशक्रिया-

भोगने के लिये समर्थ हो सकता है क्या? तात्पर्य इन प्रश्नों के करने का ऐसा है कि पूर्वोक्त विशेषणवाला देव बाह्य पुद्गलों को विना ग्रहण किये या ग्रहण करके इन प्रश्नित कार्यों के करने में समर्थ हो सकता है क्या? यहां ये आठ प्रश्न हैं, आगमन विषयक प्रथम प्रश्न है, गमन विषयक द्वितीय प्रश्न है, भाषण व्याकरण विषयक तीसरा प्रश्न है। उन्मेष निमेष विषयक चतुर्थ प्रश्न है, आकुञ्चन प्रसारण विषयक पांचवां प्रश्न हैं। स्थानादि विषयक छट्ठा प्रश्न हैं। विकुर्वणा विषयक सातवां प्रश्न है और परिचारणा विषयक आठवां प्रश्न है। इस प्रकार से ये शक्र के ८ प्रश्न हैं। इन प्रश्नों के उत्तर में प्रभु का ऐसा ही कथन है कि पूर्वोक्त विशेषणो वाला देव बाह्य पुद्गलों को ग्रहण करके इन सब क्रियाओं के करने में समर्थ हो

ભોગવવામાં સમર્થ થઈ શકે છે? કહેવાનું તાત્પર્ય એ છે કે પૂર્વોકત વિશેષણોવાળો દેવ બહારના પુદ્ગલોને ગ્રહણ કર્યા સિવાય અગર ગ્રહણ કરીને આ પ્રશ્નમાં કહેલા તમામ કાર્યો કરી શકે છે? અહિંયા આ આઠ પ્રશ્નો છે. (૧) આગમન વિષયનો પહેલો પ્રશ્ન છે. (૨) ગમન વિષેનો બીજો પ્રશ્ન છે. (૩) ભાષણ, વ્યાકરણ વિષેનો ત્રીજો પ્રશ્ન છે. (૪) ઉન્મેષનિમેષ (ઉઘાડવુ વાસવુ) વિષેનો ચોથો પ્રશ્ન છે. (૫) સંકોચાવવું અને ફેલાવવું એ વિષેનો પાંચમો પ્રશ્ન છે. (૬) સ્થાન વિગેરે વિષયનો છઠ્ઠો પ્રશ્ન છે. (૭) વિકુર્વણા વિષેનો સાતમો પ્રશ્ન પ્રશ્ન છે. (૮) પરિચારણા (વિષયભોગ) ભોગવવા સંબંધી આઠમો પ્રશ્ન છે. આ રીતે શક્રના આ આઠ પ્રશ્નો છે. તે પ્રશ્નોના સંબંધમાં પ્રભુ એવો ઉત્તર આપે છે કે પૂર્વોકત વિશેષણોવાળો દેવ બહારના પુદ્ગલોને ગ્રહણ કરીને આ બધી ક્રિયાઓ કરવામાં સમર્થ થાય છે. બહારના

करणं देवानां सुलभमेव वाह्यपुद्गलसहकारेणेति भगवत उत्तरमिति। 'इमाइं अट्ठ उक्खित्तपसिणवागरणाइं पुच्छइ' इमानि अष्टौ उत्क्षिप्तप्रश्नव्याकरणानि पृच्छति–उत्क्षिप्तानीव उत्क्षिप्तानि अविस्तारयति स्वरूपाणि प्रष्टुं योग्यत्वात् प्रश्नाः व्याक्रियमाणत्वाच्च व्याकरणानि यानि तानि उत्क्षिप्तप्रश्नव्याकरणानि 'पुच्छित्ता' पृष्ट्वा 'संभंतियवंदणएणं वंदइ' सम्भ्रान्तिकवन्दनेन वन्दते, संभ्रान्तिः–संभ्रम औत्सुक्यं तया संभ्रान्त्या निर्वृत्त–संपादितं यद् वन्दकम् तत् संभ्रान्तिकवन्दनकम् तादृशवन्दनकेन भगवन्तं शक्रो वन्दते इति 'वंदित्ता' वन्दित्वा 'तमेव जाणविमाणं दुरुहइ' तमेव यानविमानम् अधिरोहति, येन दिव्येन यानविमानेन आगतस्तमेव विमानमधिरोहति 'दुरुहित्ता' अधिरुह्य–विमानोपरि उपविश्य 'जामेव दिसं पाउब्भूए' यामेव दिशं प्रादुर्भूतः, यामेव दिशं समाश्रित्य प्रादुर्भूतो यत एव समागत इत्यर्थः 'तामेव दिसं पडिगए' तामेव दिशं प्रतिगतः शक्रो यानविमानेन आगत्य भगवन्तम् अष्ट प्रश्नान् पृष्ट्वा पुनरपि सौत्सुक्यवन्दनादिकं कृत्वा स्वस्थानं गत इति भावः ॥ सू० १ ॥

---

सकना। विना ग्रहण किये नहीं। बाह्य पुद्गलों के सहकार से ऐसी क्रियाओं का करना देवों को सुलभ ही है। ऐसा भगवान् का उत्तर है। 'इमाइं अट्ठ उक्खित्तपसिणवागरणाइं पुच्छइ' ये प्रश्न उत्क्षिप्त इसलिये हो गये हैं कि ये अविस्तृत स्वरूपवाले हैं। तथा प्रष्टुं योग्य होने से प्रश्न रूप हैं एवं व्याक्रियमाण होने से उत्तर देने के योग्य होने से–व्याकरणरूप हैं। ऐसे इन उत्क्षिप्त, प्रश्नरूप एवं व्याकरण रूप–प्रश्नो को प्रभु से शक्र ने पूछा–'पुच्छित्ता' पूछकर 'संभंतियवंदणएणं वंदइ' फिर उसने बडे उत्कण्ठा के साथ जल्दी से प्रभु को वन्दना की 'वंदित्ता' वन्दना करके फिर वह 'तमेव जाणविमाणं दुरुहइ' जिस दिव्य विमान से आया था उसी दिव्य विमान पर सवार हो गया।

---

પુદ્ગલોના સહકારથી એવી ક્રિયાઓનું કરવું દેવોને સુલભ હોય છે. એ પ્રમાણે ભગવાનનો ઉત્તર છે "इमाइं अट्ठ उक्खित्तपसिणवागरणाइं पुच्छइ" આ પ્રશ્નો ઉત્ક્ષિપ્ત એ માટે કહ્યા છે કે તેનું સ્વરૂપ અવિસ્તૃત છે. તથા પૂછવાને યોગ્ય હોવાથી પ્રશ્ન રૂપ છે અને વ્યાક્રિયમાણ હોવાથી (ઉત્તર દેવા યોગ્ય હોવાથી) વ્યાકરણ રૂપ છે. એવા આ ઉત્ક્ષિપ્તરૂપ અને વ્યાકરણ રૂપ આઠ પ્રશ્નો શક્રે પ્રભુને પૂછયા "पुच्छित्ता" પૂછીને "संभंतियवदणएणं वंदइ" પછી તેણે ઘણી ઉત્કંઠાથી જલદી પ્રભુને વંદના કરી "वंदित्ता" વંદન કરીને પછી તે "तमेव जाणविमाणं दुरुहइ" જે દિવ્ય વિમાનમાં બેસીને આવ્યો હતો તેજ દિવ્ય વિમાન પર સવાર થઇ ગયો. "दुरुहित्ता"

सर्वदेव शक्रो भगवन्तं वन्दते नमस्यति यावत्पर्युपास्ते कथमद्य शक्रः संक्षेपेण अष्टौ प्रश्नान् पृष्ट्वा सोत्सुको गतः, इत्यत्र कारणं ज्ञातुं भगवन्तं पृच्छति गौतमः–'भंते त्ति' इत्यादि ।

मूलम्–'भंते त्ति भगवं गोयमे समणं भगवं महावीरं वंदइ नमंसइ वंदित्ता, नमंसित्ता एवं वयासी अन्नया णं भंते! सक्के देविंदे देवराया देवाणुप्पियं वंदइ नमंसइ सक्कारेइ जाव पज्जुवासइ, किण्णं भंते अज्ज सक्के देविंदे देवराया देवाणुप्पियं अट्ठ उक्खित्तपसिणवागरणाइं पुच्छइ, पुच्छित्ता संभंतियवंदणएणं वंदइ नमंसइ जाव गए गोयमाइ समणे भगवं महावीरे भगवं गोयमं एवं वयासी–एवं खलु गोयमा! महासुक्के कप्पे महासामाणे विमाणे दो देवा महड्ढिया जाव महासोक्खा एगविमाणंसि देवत्ताए उववन्ना, तंजहा मायिमिच्छादिट्ठि उववन्नए य अमायि सम्मदिट्ठिउववन्नए य। तए णं से मायिमिच्छादिट्ठिउववन्नए देवे तं अमायिसम्मदिट्ठिउववन्नगं देवं एवं वयासी परिणममाणा पोग्गला नो परिणया अपरिणया। तए णं से अमायिसम्मदिट्ठिउववन्नए देवे तं मायिमिच्छादिट्ठिउववन्नगं देवं एवं वयासीपरिणममाणा पोग्गला परिणया नो अपरिणया परिणमंतीति पोग्गला परि-

'दुरुहित्ता' सवार होकर 'जामेव दिसं पाउब्भूए' फिर वह जिस दिशा से आया था-'तामेव दिसं पडिगए' उसी दिशा से चला गया ॥सू० १ ॥

સવાર થઈને બેસીને "जामेव दिसं पाउब्भूए" પછી તે જે દિશાથી આવ્યો હતો. "तामेव दिसं पडिगए" તે દિશા તરફ પાછો ચાલ્યો ગયો. ॥સૂ૦૧॥

णया नो अपरिणया। तं मायिमिच्छादिट्ठिउववन्नगं देवं एवं पडिहणइ पडिहणित्ता ओहिं पउंजइ ओहिं पउंजित्ता ममं ओहिणा आभोएइ आभोएत्ता अयमेयारूवे जाव समुप्पज्जित्था-एवं खलु समणे भगवं महावीरे जंबुद्दीवे दीवे जेणेव भारहे वासे, जेणेव उल्लुयतीरे नयरे जेणेव एगजंबुए चेइए जाव अहापडिरूवं जाव विहरइ। तं सेयं खलु मे समणं भगवं महावीरं वंदित्ता जाव पज्जुवासित्ता इमं एयारूवं वागरणं पुच्छित्तए त्तिकट्टु एवं संपेहेइ संपेहित्ता चउहिं सामाणियसाहस्सीहिं० परिवारो जहा सूरियाभस्स जाव निग्घोस-नाइयरवेणं जेणेव जंबुद्दीवे दीवे जेणेव भारहे वासे जेणेव उल्लुयतीरे नयरे जेणेव एगजंबुए चेइए जेणेव मम अंतियं तेणेव पहारेत्थ गमणाए तएणं से सक्के देविंदे देवराया तस्स देवस्स तं दिव्वं देविड्ढिं दिव्वं देवजुइं दिव्वं देवाणुभावं दिव्वं तेयलेस्सं असहमाणे मम अट्ठ उक्खित्तपसिणवागरणाइं पुच्छइ पुच्छित्ता सभंतिय जाव पडिगए ॥सू० २॥

छाया—भदन्त इति भगवान् गौतमः श्रमणं भगवन्तं महावीरं वन्दते नमस्यति वन्दित्वा नमस्यित्वा एवमवादीत् अन्यदा खलु भदन्त ! शक्रो देवेन्द्रो देवराजो देवानुप्रियं वन्दते नमस्यति सत्कारयति यावत्पर्युपास्ते किं खलु भदन्त ! अद्य शक्रो देवेन्द्रो देवराजो देवानुप्रियम् अष्टोत्क्षिप्तप्रश्नव्याकरणानि पृच्छति पृष्ट्वा सांभ्रान्तिकवन्दनकेन वन्दते नमस्यति यावत्प्रतिगतः। गौतम इति श्रमणो भगवान् महावीरो भगवन्तं गौतममेवम् अवादीत्, एवं खलु गौतम ! तस्मिन् काले तस्मिन् समये महाशुक्रे कल्पे महासामाने विमाने द्वौ देवौ महर्द्धिकौ यावद् महासौख्यौ एकविमाने देवतया उत्पन्नौ तद्यथा मायि मिथ्यादृष्ट्युपपन्नकश्च अमायिसम्यग् दृष्ट्युपपन्नकश्च ततः खलु से मायि मिथ्यादृष्ट्युपपन्नको देवस्तम् अमायिसम्यग् दृष्ट्युपपन्नकं देवम् एवमवादीत् परिणमसाणाः पुद्गलाः नो परिणताः, अपरिणताः परिणमन्तीति पुद्गलाः नो परिणता अपरिणताः। ततः खलु सोऽमायि सम्यग्दृष्ट्युपपन्नको देवस्तं मायि मिथ्यादृष्ट्युपपन्नकं देवम् एवम्

अवादीत् परिणममाणाः पुद्गलाः परिणताः, नो अपरिणताः परिणमन्तीति पुद्गलाः परिणताः, नो अपरिणताः तं मायिमिथ्यादृष्ट्युपपन्नकं देवम् एवं प्रतिहन्ति प्रतिहत्य अवधिं प्रयुङ्क्ते प्रयुज्य माम् अवधिना आभोगयति, आभोग्य अयमेतद्रूपो यावद् समुदपद्यत एवं खलु श्रमणो भगवान् महावीरो जंबूद्वीपे द्वीपे यत्रैव भारतं वर्षम् यत्रैव उल्लुकतीरं नाम नगरम्, यत्रैव एकजंबूकं चैत्यम् यावद् यथा प्रतिरूपम् यावद् 'विहरति तत् श्रेयः खलु मे श्रमणं भगवन्तं महावीरं वन्दित्वा यावत् पर्युपास्य इममेतावद्रूपं व्याकरणम् प्रष्टुम् इति कृत्वा एवं संप्रेक्षते संप्रेक्ष्य चतसृभिः सामानिकसाहस्रीभिः परिवारः, यथा सूर्याभस्य यावद् निर्घोषनादितरवेण यत्रैव जम्बूद्वीपो द्वीपः यत्रैव भारतं वर्षं यत्रैव उल्लूकतीरं नगरम् यत्रैव एकजम्बूकं चैत्यम् यत्रैव ममान्तिकं तत्रैव प्रधारयति गमनाय। ततः खलु सः शक्रः, देवेन्द्रो देवराजस्तस्य देवस्य तां दिव्यां देवर्द्धिं दिव्यां देवद्युतिं दिव्यं देवानुभावं दिव्यां तेजोलेश्याम् असहमानो माम् अष्टोक्षिप्तप्रश्नव्याकरणानि पृच्छति पृष्ट्वा सांभ्रान्तिक यावत् प्रतिगतः ॥ सू० २ ॥

टीका—'भंते त्ति भगवं गोयमे' भदन्त इति भगवान् गौतमः, हे भदन्त! इत्यादिरूपेण भगवन्तं सम्बोध्य भगवान् गौतमः 'समणं भगवं महावीरं' श्रमणं भगवन्तं महावीरम् 'वंदइ नमंसइ' वन्दते नमस्यति 'वंदित्ता नमंसित्ता एवं

सर्वदा ही शक्र भगवान् को वन्दना करता है, नमस्कार करता है, यावत् वह उनकी पर्युपासना करता है तो फिर क्यों वह आज शक्र संक्षेप से आठ प्रश्नों को पूछकर सोत्सुक हुआ चला गया—इस विषय में कारण जानने की इच्छा से गौतम भगवान् से पूछते हैं—'भंतेत्ति' इत्यादि—

'भंतेत्ति भगवं गोयमे समणं भगवं महावीरं' इत्यादि।

टीकार्थ—'भंतेत्ति भगवं गोयमे' हे भदन्त! इस प्रकार से भगवान् गौतमने प्रभु को संबोधित करके 'समणं भगवं महावीरं वंदइ' श्रमण

શક્ર હમેશા ભગવાનને વંદના કરે છે યાવત્ તેમની પર્યુપાસના કરે છે. તો પછી તે શક્ર આજે સંક્ષિપ્તથી આઠ પ્રશ્નો પૂછી અને ઉત્સૂકતાવાળો થઇને ચાલ્યો ગયો. તે વિષેનું કારણ જાણવાની ઇચ્છાથી ગૌતમ સ્વામીએ આ વિષયમાં આ પ્રમાણે પૂછ્યું.—"ભંતેત્તિ" ઇત્યાદિ—

ટીકાર્થ—"भंतेत्ति भगवं गोयमे समणं भगवं महावीरं" ભગવાન ગૌતમે હે ભગવન્! એ પ્રમાણે પ્રભુને સંબોધન કરીને "समणं भगवं महावीरं वंदइ" શ્રમણ ભગવાન મહાવીરને વંદના કરી તેમના ગુણોની સ્તુતિ કરી

वयासी' वन्दित्वा नमस्यित्वा एवम् वक्ष्यमाणप्रकारेण अवादीत् 'अन्नया णं भंते' अन्यदा अन्यस्मिन् काले खलु भदन्त ! 'सक्के देविंदे देवराया' शक्रो देवेन्द्रो देवराजः 'देवाणुप्पियं वंदइ नमंसइ सकारेइ' देवानुप्रियं भगवन्तं वन्दते नमस्यति सत्करोति 'जाव पज्जुवासइ' यावत् पर्युपास्ते, अत्र यावत्पदेन 'सकारेइ सम्मानेइ कल्लाणं मंगलं देवयं चेइयं' इत्यादिनां सङ्ग्रहः 'किण्णं भंते ! अज्ज सक्के देविंदे देवराया' किं खलु भदन्त ! अद्य शक्रो देवेन्द्रो देवराजः 'देवाणुप्पियं अट्ठ उक्खित्तपसिणवागरणाइं पुच्छइ' देवानुप्रियम् अष्टौत्क्षिप्तप्रश्नव्याकरणानि पृच्छति 'पुच्छित्ता संभंतियवंदणएणं वंदइ नमंसइ जाव पडिगए'

---

भगवान् महावीर को वन्दना की-गुणस्तुति की 'नमंसइ' नमस्कार किया 'वंदित्ता नमंसित्ता' वन्दना नमस्कार करके 'एवं वयासी' फिर उन से इस प्रकार कहा-पूछा-'अन्नया णं भंते ! हे भदन्त ! जब कभी 'सक्के देविंदे देवराया' देवेन्द्र देवराज शक्र 'देवाणुप्पियं वंदइ नमंसइ, सक्कारेइ, 'आप देवानुप्रिय को वन्दना करता था नमस्कार करता था, सत्कार करता था। जाव पज्जुवासइ' तब वह आपकी यावत् पर्युपासना करता था-यहां यावत् शब्द से-'सक्कारेइ, सम्माणेइ, कल्लाणं, मंगलं, देवयं' इत्यादि पदों का संग्रह हुआ है फिर आज 'किण्णं भंते ! अज्ज सक्के देविंदे देवराया' क्या बात है जो देवेन्द्र देवराज शक्रने 'देवाणुप्पियं अट्ठ उक्खित्तपसिणवागरणाइं पुच्छइ' आप देवानुप्रिय से आठ उत्क्षिप्त-पूछने योग्य प्रश्न-व्याकरणों को पूछा है और 'पुच्छित्ता' पूछ करके ही 'संभंतियवंदणएणं वंदइ, जाव पडिगए' वह उतावली के साथ आपको वन्दना, नमस्कार

---

"नमंसइ" નમસ્કાર કર્યા "वंदिता नमंसित्ता" વંદના નમસ્કાર કરીને "एवं वयासी" તે પછી ભગવાનને આ પ્રમાણે પૂછ્યું "अन्नया णं भंते ! હે ભગવન્ ! જ્યારે "सक्के देविंदे देवराया" દેવેન્દ્ર દેવરાજ શક્ર "देवाणुप्पियं वंदइ नमसइ सक्कारेइ" આપ દેવાનુપ્રિયને વંદના કરતા હતા નમસ્કાર કરતા હતા સત્કાર કરતા હતા. "जाव पज्जुवासइ" તે પછી તે ઈન્દ્ર યાવત્ પર્યુપાસના કરતા હતા અહિંયા 'યાવત્' શબ્દથી "सक्कारेइ सम्माणेइ, कल्लाणं, मंगलं देवयं चेइयं" 'ઇત્યાદિ' પદનો સંગ્રહ થયો છે તો પછી આજે "किण्णं भंते ! अज्ज सक्के देविंदे देवराया" શું વાત છે કે દેવેન્દ્ર દેવરાજ ઇન્દ્રે 'देवाणुप्पियं अट्ठ उक्खित्तपसिणवागरणाइं पुच्छइ" આપ દેવાનુપ્રિયને પૂછવા યોગ્ય આઠ પ્રશ્નો પૂછયા છે અને "पुच्छित्ता" પૂછીને તરતજ "संभंतियवंदणएणं वंदइ, जाव पडिगए" ઉતાળથી આપને

पृष्ट्वा सांभ्रान्तिकवन्दनकेन वन्दते नमस्यति यावत् प्रतिगतः, यावत्पदेनात्र वन्दित्वा नमस्यित्वा यामेव दिशं प्रादुर्भूतस्तामेव दिशं पर्यन्तस्य संग्रहः, अन्यदा तु स्वस्थचित्तः शक्रो भगवन्तं वन्दनादिकं कृत्वा ततः प्रश्नात् पृच्छति प्रश्नस्य च यथावदुत्तरं समवाप्य अवधार्य च स्वस्थचित्तेन वन्दनादिकं यावत् पर्युपासनादिकं कृत्वा ततो गच्छति कथमद्य चंचलचित्त इव अवभासमानः शक्रः प्रश्नमात्रं पृष्ट्वा त्वरितमेव गतस्तत्र किं कारणमिति गौतमप्रश्नाशयः। भगवानाह-'गोइमाइ' इत्यादि 'गोइमाइ समणे भगवं महावीरे' गौतम इति एवं रूपेण संबोध्य श्रमणो भगवान् महावीरः, 'भगवं गोयमं एवं वयासी' भगवन्तं गौतमम् एवमवादीत् 'एवं खलु गोयमा!' एवं खलु गौतम! 'तेणं कालेणं तेणं समएणं' तस्मिन् काले तस्मिन् समये 'महासुक्के कप्पे महासमाणे विमाणे' महाशुक्रे कल्पे महा-

---

कर यावत् चला गया है। यहां यावत्पद से' वंदित्ता नमंसित्ता जामेव दिसं पाउब्भूए, तामेव दिसं 'इन पदों का संग्रह हुआ है। गौतम के इस प्रश्न का भाव ऐसा है कि देवेन्द्र देवराज शक्र जब आपकी वन्दनादि करने के लिये आता था। तब वह शांत-चित्त होकर आपसे प्रश्न पूछता था और आप से यथावत् उत्तर पाकर एवं उसे हृदय धारण कर स्वस्थचित्त से आपको वन्दनादिक क्रिया को एवं पर्युपासनादिक क्रिया को करता था, फिर जाता था, पर आज क्या बात हुई है जो वह चंचलचित्त के जैसा प्रतीत होता हुआ केवल प्रश्न मात्र को पूछकर ही जल्दी से चला गया है इसके उत्तर में प्रभु ने कहा-'गोयमाइ समणे भगवं महावीरे' हे गौतम! 'एवं खलु गोयमा!' कारण ऐसा है-'तेणं कालेणं तेणं समएणं' उस काल में और उस समय में 'महासुक्के

---

વંદના નમસ્કાર કરીને યાવત્ ચાલ્યો ગયો અહિં 'યાવત્' પદથી "वंदित्ता नमंसित्ता जामेव दिसं पाउब्भूए, तामेव दिसं" એ પદોનો સંગ્રહ થયો છે. ગૌતમના આ પ્રશ્નોનો ભાવ એ છે કે દેવેન્દ્ર દેવરાજ શક્ર જ્યારે જ્યારે આપને વંદના વિગેરે કરવા માટે આવતા હતા ત્યારે ત્યારે તે શાંત ચિત્ત થઇને આપને પ્રશ્ન પૂછતા હતા અને આપની પાસેથી તેનો યથાવત ઉત્તર મેળવીને અને તેને હૃદયમાં ધારણ કરીને સ્વસ્થ ચિત્તથી આપની વંદના વિગેરે ક્રિયા અને પર્યુપાસના વિગેરે ક્રિયા કરતો હતો અને તે પછી તે જતો હતો પરંતુ આજે શું છે. કે તે શક્ર ભ્રમિત ચિત્તની જેમ કેવળ પ્રશ્ન પૂછીને જ જલદી જલદી ચાલ્યો ગયો છે. તેના ઉત્તરમાં પ્રભુ કહે છે કે-"गोयमाइ समणे भगवं महावीरे" હે ગૌતમ! "एवं खलु गोयमा! તેનું કારણ એ છે કે "तेणं कालेणं तेणं समएणं" તે કાળે અને તે સમયમાં "महा-

समाननामकविमाने 'दो देवा महड्डिया जाव महासोक्खा' द्वौ देवौ महर्द्धिकौ यावद् महासौख्यौ यावत्पदेन 'महज्जुइए महाबले महाजसे' एतेषां सङ्ग्रहः 'एगविमाणंसि देवत्ताए उववन्ना' एकस्मिन् विमाने देवतया उत्पन्नौ 'तं जहा' तद्यथा 'मायिमिच्छादिट्ठिउववन्नए य' मायी मिथ्यादृष्ट्युपपन्नकश्च, 'अमायि सम्मदिट्ठि उववन्नए य' अमायि सम्यग् दृष्ट्युपपन्नकश्च 'तए णं से मायिमिच्छादिट्ठि उववन्नए देवे' ततः खलु स मायिमिथ्यादृष्ट्युपपन्नको देवः 'तं अमायि सम्मदिट्ठि उववन्नगं देवं एवं वयासी' तममायिसम्यग्दृष्ट्युपपन्नकं देवम् एवम् वक्ष्यमाणप्रकारमवादीत्। किमुक्तवान् पूर्वो देवोऽपरं देवं तत्राह-'परिणममाणा पोग्गला नो परिणया' परिणममानाः पुद्गलाः, नो परिणताः, अपि तु 'अपरिणया'

कप्पे महासमाणे विमाणे' महाशुक्र कल्प में महासमाननामक विमान में 'दो देवा महड्डिया जाव महासोक्खा' महर्द्धिक यावत् महासौख्य सुख संपन्न दो देव 'एगविमाणंसि देवत्ताए उववन्ना' एक विमान में देवरूप से उत्पन्न हुए हैं, यहां यावत् पद से 'महज्जुइए महाबले महाजसे' इन पदोंका संग्रह हुआ है। 'तं जहा-मायिमिच्छादिट्ठि उववन्नए य, अमायिसम्मादिट्ठि उववन्नए य' इनमें एक मायी मिथ्यादृष्टि देव उत्पन्न हुआ है, एक अमायीसम्यग्दृष्टि उपन्नक देव है। 'तए णं स मायिमिच्छादिट्ठि उववन्नए देवे' उस मायी मिथ्यादृष्टि उपपन्नक देवने 'तं अमायी सम्मादीट्ठिं उववन्नगं देवं एवं वयासी' उस अमायी सम्यग्दृष्टि उपपन्नक देव से ऐसा कहा-'परिणममाणा पोग्गला नो परिणया' परिणाम को प्राप्त करते हुए पुद्गल परिणत नहीं कहे जाते हैं, अपितु वे 'अपरिणया' अपरिणत ही कहे

सुक्के कप्पे महासमाणे विमाणे" મહાશુક્ર કલ્પમાં મહાસમાન નામના વિમાનમાં "दो देवा महड्ढिया जाव महासोक्खा" મહાઋદ્ધિવાળા યાવત્ મહાસુખવાળા બે દેવ "एगविमाणंसि देवत्ताए उववन्ना" એક વિમાનમાં દેવ રૂપથી ઉત્પન્ન થયા છે. અહિંયા યાવત્ પદથી "महज्जुइए महाबले महाजसे" આ પદોનો સંગ્રહ થયો છે. 'तं जहा-मायिमिच्छादिट्ठि उववण्णए य अमायिसम्मादिट्ठि उववन्नएय" તેમાં એક માયિ મિથ્યાદષ્ટિવાળો દેવ ઉત્પન્ન થયો છે, અને એક અમાયી સમ્યગ્દૃષ્ટિવાળો દેવ ઉત્પન્ન થયો છે. "तए णं से मायिमिच्छादिट्ठि उववन्नए देवे" તે ઉત્પન્ન થયેલા માયીમિથ્યાદૃષ્ટિ દેવે "तं अमायि सम्मादिट्ठि उववन्नगं देवं एवं वयासी" તે અમાયી સમ્યગ્દૃષ્ટિ ઉત્પન્ન થયેલા દેવને આ પ્રમાણે કહ્યું-"परिणममाणा पोग्गला नो परिणया" પરિણતીને પ્રાપ્ત કરનારા પુદ્ગલ, પરિણત કહેવાતા નથી પરંતુ તે "अपरिणया" અપ-

अपरिणता एव परिणमनक्रियाविषयीभूताः पुद्गलाः, न परिणताः तत्रैवोपपत्तिमाह–'परिणमंति पोग्गला नो परिणया' परिणमंति परिणामं प्राप्नोति इति कृत्वा नो परिणताः 'अपरिणया' अपरिणता एवेति मिथ्यादृष्टिदेवमतम्, अयमाशयः परिणमन्तीति कथनेन वर्त्तमानकालावभासो भवति परिणता इति कथनेन भूतकालावभासो भवति, भूतकालश्च वर्त्तमानस्य विरोधी यतो वर्त्तमानकालिकध्वंसप्रतियोगित्वस्यैव भूतमिति संज्ञा भवति ततश्च यदा वर्त्तमाना क्रिया परिणामे विद्यते तदा भूतक्रिया तत्र कथं स्यात् भूतवर्त्तमानयोः परस्परं विरोधात् अतः परिणमन्तीति कृत्वा पुद्गला नो परिणताः, अपरिणता एव मिथ्या

---

जाते हैं। क्योंकि वे परिणाम क्रिया के विषयभूत बने रहते हैं। इसी बात को इस प्रकार से कहा गया है कि 'परिणमंति पोग्गला नो परिणया' जो पुद्गल वर्तमान में परिणमन क्रिया के विषयभूत बन रहे हैं वे पुद्गल परिणत नहीं है किन्तु 'अपरिणया' अपरिणत ही हैं, ऐसा अपना मन्तव्य मिथ्यादृष्टि देवने प्रकट किया है, इसका आशय ऐसा है कि 'परिणमन्ति' ऐसा कहने से वर्तमानकाल का ही अवभास होता है। भूतकाल का नहीं। भूतकाल वर्तमानकाल का विरोधी है। क्योंकि वर्तमानकालिक ध्वंस (नाश) रूप है उसी का नाम भूत है। इसलिये जिस समय परिणाम में वर्तमान क्रिया मौजूद है तब भूत क्रिया उसमें कैसे आसकती है? क्योंकि भूत में और वर्तमान में आपस में विरोध है। अतः 'परिणमन्ति' ऐसे कथन से वर्तमानकालिक परिणमन का बोध होने से पुद्गल 'परिणत' नहीं माने जाते हैं किन्तु वे 'अपरिणत' ही माने जाते हैं।

---

રિણુત જ કહેવાય છે. કેમકે તે પરિણામ ક્રિયાના વિષયવાળા બનેલા હોય છે. એ વાતને આ રીતે જ અથવા આ પ્રમાણે જ કહેવામાં આવે છે. "परिणमंति पोग्गला नो परिणया" જે પુદ્ગલ વર્તમાનમાં પરિણમન ક્રિયાવાળા બનેલા છે તે પુદ્ગલ 'પરિણુત' કહેવાતા નથી પરંતુ "अपरिणया" અપરિણુત જ છે એવું પોતાનું મંતવ્ય મિથ્યાદૃષ્ટિ દેવે પ્રગટ કર્યું છે. તેનો આશય એ છે કે "परिणमंति" એવું કહેવાથી વર્તમાનકાળનો જ બોધ થાય છે. ભૂતકાળનો બોધ થતો નથી ભૂતકાળ વર્તમાન કાળનો વિરોધી છે. કેમકે વર્તમાન કાળના ધ્વંસ (નાશ) રૂપ છે તેનું નામજ 'ભૂતકાળ' છે. તેથી જે સમયે પરિણમનમાં વર્તમાન ક્રિયા રહેલી છે તે સમયે ભૂતક્રિયા તેમાં કેવી રીતે આવી શકે? કેમકે ભૂતક્રિયા અને વર્તમાન ક્રિયામાં પરસ્પરમાં વિરોધાભાસ છે તેથી "परिणमन्ति" એ પ્રમાણેના કથનથી વર્તમાન કાળસંબંધી પરિણમનનો બોધ થાય છે તેથી પુદ્ગલ "परिणत"

दृष्टिमतम्, सम्यग्दृष्टिः पुनराह 'तए णं' इत्यादि 'तए णं से अमायिसम्मदिट्ठि उववन्नए देवे' ततः खलु सोऽमायी सम्यग् दृष्ट्युपपन्नको देवः 'तं मायिमिच्छादिट्ठिउववन्नगं देवं एवं वयासी' तं मायिमिथ्यादृष्ट्युपपन्नकं देवम् एवमवादीत् 'परिणममाणा पोग्गला परिणया नो अपरिणया' परिणममानाः पुद्गला परिणताः, नो अपरिणताः, ये पुद्गलाः परिणामक्रियां माप्नुवन्ति ते परिणता एव कुतः वर्तमानानां भूतत्वम्? तत्राह–'परिणमंतीति पोग्गला परिणया नो अपरिणया' परिणमन्तीति पुद्गलाः परिणताः, नो अपरिणताः परिणमन्तीति कृत्वा पुद्गलाः परिणता एव नो अपरिणताः। 'परिणमन्ति' इति तदैव वक्तुं शक्यते यदा परि-

इसके उत्तर में 'तए णं से अमायिसम्मदिट्ठिउववन्नए देवे तं मायिमिच्छदिट्ठिउववन्नगं देवं एवं वयासी' उस अमायी सम्यग्दृष्टिउपपन्नक देव ने उस मायिमिथ्यादृष्टिउपपन्नकदेव से ऐसा कहा 'परिणममाणा पोग्गला परिणया नो अपरिणया' परिणममाण पुद्गल परिणत माने गये हैं अपरिणत नहीं। जो पुद्गलपरिणाम क्रिया को प्राप्त कर रहे हैं वे परिणत हैं क्योंकि 'परिणमंतीति पोग्गला परिणया नो अपरिणया' 'परिणमंति' ऐसा तब ही कहा जा सकता है कि जब परिणाम क्रिया का उनमें सद्भाव होता है। नहीं तो परिणाम क्रिया के असद्भाव काल में भी यदि 'परिणमंति' ऐसा कहा जावेगा तो जैसा यह यहां कहा जाता है वैसा ही अन्यत्र भी ऐसा ही कहा जाना चाहिये जब परिणाम का सद्भाव हो रहा है तब

માનવામાં આવતા નથી પરંતુ તે અપરિણત જ માનવામાં આવે છે. આ પ્રમાણેનું માયી મિથ્યાદૃષ્ટિનું કથન સાંભળીને તેના ઉત્તરમાં "तए णं से अमायिसम्मदिट्ठिउववन्नए देवे तं मायिमिच्छादिट्ठिउववन्नगं देवं एवं वयासी" તે અમાયિ સમ્યગદૃષ્ટિ ઉપપન્નક દેવે તે માયી મિથ્યાદૃષ્ટિ ઉપપન્નક દેવને આ પ્રમાણે કહ્યું "परिणममाणा पोग्गला परिणया नो अपरिणया" પરિણમમાન્ (ફેરફાર થતા) પુદ્ગલ પરિણત માનવામાં આવે છે અપરિણત માનવામાં આવતા નથી જે પુદ્ગલ પરિણામ ક્રિયાને પ્રાપ્ત કરી રહ્યા છે તે પરિણત જ છે. કેમકે "परिणमंतीति पोग्गला परिणया नो अपरिणया परिणमंति" એવું ત્યારે જ કહી શકાય છે કે જ્યારે પરિણામ ક્રિયા તેનામાં રહેલી હોય નહિં તો પરિણામ ક્રિયાના અસદ્ભાવ–અવિદ્યમાનપણામાં પણ જો "परिणमंति" એવું કહેવામાં આવે તો જેવી રીતે અહિંયા કહેવામાં આવે છે. તેવી જ રીતે બીજે પણ એવું જ કહેવાવું જોઈએ જ્યારે પરિણામનો સદ્ભાવ થઇ રહ્યો છે. ત્યારે "परिणमंति" એ રીતના વ્યવહારમાં ત્યાં પરિણતત્વનો

णामक्रियायाः सद्भावो भवेत् अन्यथा परिणामक्रियाया असद्भावकालेऽपि परिणमन्तीति यदि स्यात् तदा तत्र इव अन्यत्रापि परिणमन्तीति व्यवहार आपद्येत परिणामसद्भावे तु परिणमन्तीति व्यवहारे परिणतत्वमवश्यं प्रतिभाति। यदि परिणामे सत्यपि परिणतत्वं न स्यात् तदा सर्वदेव परिणतत्वस्य अभाव एव प्रसज्येतेति। अयं भावः, आमपाकादौ 'निभाडो' इति गुर्जरप्रसिद्धे घटादेः प्रक्षेपानन्तरं यावत्कालपर्यन्तम् आमपाकतो घटादीनां निःसारणं न क्रियते तावत्कालपर्यन्तं परिणमंतीति व्यवहारदर्शनेन परिणामक्रिया दीर्घकालिकीति विज्ञायते ततश्च यदि प्रथमसमये परिणामो न जातो द्वितीयसमये परिणामो नाभूत् तदा अन्तिमसमये स परिणामो भविष्यतीति प्रत्याशा मात्रम् अतः प्रथमसमये

'परिणमन्ति' इस प्रकार के व्यवहार में वहां परिणतत्व का अवभास अवश्य होता है। यदि परिणाम के सद्भाव में भी परिणतत्व का सद्भाव न हो तो सर्वदा ही परिणतत्व का अभाव ही प्रसक्त होगा। इसका अभिप्राय ऐसा है-जहां मिट्टी के वर्तन पकाये जाते हैं ऐसे निभाड-या आवा-में घटादिके प्रक्षेप करने पर जब तक वे घटादिक उससे बाहर निकाले जाते हैं-तब तक वे उसमें पक रहे हैं ऐसा व्यवहार होना हुआ देखा जाता है। अतः इस व्यवहार से ऐसा ज्ञात होता है कि परिणाम क्रिया दीर्घकालभाविनी है, अब यहां विचारणा ऐसी होती है कि यदि प्रथम समय में घटादिकों में परिणामक्रिया हुई न मानी जावे तो वह द्वितीय समय में भी कैसे हुई मानी जा सकेगी? इस हालत में अन्तिम समय में वह परिणाम-परिणमनक्रिया-पूरी हो जावेगी-यह तो केवल एक दुराशामात्र ही होगा अतः ऐसा ही

અવભાસ અવશ્ય હોય છે જો પરિણામના સદ્ભાવમાં પણ પરિણતત્વનો સદ્ભાવ ન હોય તો હમેશા પરિણતત્વનો અભાવ જ રહેશે તેનો અભિપ્રાય આ પ્રમાણે છે. જ્યાં માટીના વાસણો પકાવવામાં આવે છે એવા નિભાડામાં ઘડા વિગેરે મૂકવાથી જ્યાં સુધી તે ઘડા વિગેરે તેમાથી બહાર કાઢવામાં ન આવે ત્યાં સુધી તે નિભાડામાં પાકે છે એવો વ્યવહાર થતો જોવામાં આવે છે જેથી આ વ્યવહારથી એવું સમજાય છે કે પરિણામ ક્રિયા લાંબે કાળે થવાવાળી છે. હવે અહિં વિચારવાનું એ છે કે જો પ્રથમ સમયમાં ઘટાદિમાં પરિણમન ક્રિયા થઈ તેમ ન માનવામાં આવે તો તે બીજા સમયમાં પણ થઈ એમ કેવી રીતે માની શકાય? આ સ્થિતિમાં છેલ્લા સમયમાં પણ તે પરિણામ પરિણમન ક્રિયા પૂરી થશે એમ કહેવું તે તો કેવળ એક દુરાશા માત્ર જ

एवांशतो भवति परिणामः तदनन्तरं यावति अंशे न परिणामोऽभूत् प्रथमसमये, तावति अंशे द्वितीयसमये न परिणामो भवति एवं इत्यादि समयाधारभ्य अन्तिम-समयपर्यन्तं परिणामो जायते इति प्रथमसमयस्य नाशानन्तरमेव तत्र परिणत इति व्यवहारो भवति, प्रथमसमयापेक्षया परिणत इति व्यवहारो भूतकालिकः, द्वितीयादिसमयापेक्षया च परिणमतीति वर्त्तमानापदेशोऽपि भवतीति उभयमपि अविरुद्धमेवेति अतश्च परिणमन्तीति तत्र परिणता इति कथं न सुसंगतमेवेति

मानना चाहिये-कि प्रथम समय में ही अंशतः परिणाम होता है। इसके बाद द्वितीय समय में जितना वहां परिणाम होना चाहिये था वह वहां प्रथम समय में नहीं होता है, इसी प्रकार से तृतीय समय में जितना परिणाम होना चाहिये वह द्वितीय समय में वहां नहीं होता है। इस प्रकार प्रथम समय से लेकर अन्तिम समय तक वहां परिणमन होता रहता है अतः जब प्रथम समय नष्ट हो जाता है-तब उस समय में जो परिणाम वहां हुआ है उस परिणाम में 'परिणत' ऐसा व्यपदेश हो जाता है। यह व्यपदेश भूतकालिक है। क्योंकि यह परिणाम प्रथम समय में हो चुका है तथा द्वितीयादि समयों की अपेक्षा वह परि-णाम जो अभी होना बाकी है-वहां हो रहा है। ऐसा व्यपदेश होता है, अतः 'परिणमति' ऐसा वर्तमान कालिक व्यपदेश भी होता है और प्रथम समय की अपेक्षा वह परिणाम हो चुका है इसलिये परिणत ऐसा भी व्यपदेश होता है इस प्रकार 'परिणमन्ती परिणतः' ये दोनों व्यप-

થશે જેથી એવું જ માનવું જોઈએ કે પ્રથમ સમયમાં જ અંશતઃ પરિણામ થાય છે તે પછી બીજા સમયમાં ત્યાં જેટલું પરિણામ થવું જોઈએ તે તેમાં પ્રથમ સમયમાં થતું નથી એજ રીતે ત્રીજા સમયમાં જેટલું પરિણામ થવું જોઈએ તે બીજા સમયમાં થતું નથી આ રીતે પ્રથમ સમયથી લઈને અંતિમ સમય સુધી તેમાં પરિણામ થતું જ રહે છે. તેથી જ્યારે પ્રથમ સમય નાશ પામે છે. ત્યારે તે સમયમાં જે પરિણામ ત્યાં થયું છે તે પરિણામમાં "પરિ-ણત" એવો વ્યપદેશ (વ્યવહાર) થઇ જાય છે આ વ્યપદેશ (વ્યવહરા) ભૂત-કાળ સંબંધી છે કેમકે આ પરિણામ તેમાં પ્રથમ સમયમાં થઈ ચુકયું છે. તથા બીજા વિગેરે સમયોની અપેક્ષાએ તે પરિણામ કે જે હજી થવાનું બાકી છે તે થઈ રહ્યું છે એવો વ્યવહાર કરવામાં આવે છે. જેથી "परिण-मंति" એવો વર્તમાન સંબંધી વ્યવહાર પણ થાય છે. અને પહેલા સમયની અપેક્ષાએ તે પરિણત થઈ ચુક્યું છે, જેથી 'પરિણત' એવો પણ વ્યવહાર થાય છે આ રીતે "परिणमन्ती परिणतः" એ બન્ને પ્રકારનો વ્યપદેશ થવામાં

सम्यग् दृष्टि देवमतस्याभिप्राय इति। 'तं मायि मिच्छादिट्ठि उववन्नगं एवं पडिहणइ' तं मायि मिथ्यादृष्टयुपपन्नकम् एवं प्रतिहन्ति पराजयं करोतीत्यर्थः। 'एवं पडिहणित्ता' एवं प्रतिहन्य एवमुक्तेन प्रकारेण प्रतिहन्य पराभूय, 'ओहिं पउंजइ' अवधिम्, अवधिज्ञानम् प्रयुङ्क्ते अवधिज्ञानस्य प्रयोगं करोतीत्यर्थः 'ओहिं पउंजित्ता' अवधिं प्रयुज्य 'मम' माम् 'ओहिणा' अवधिज्ञानेन 'आभोएइ' आभोगयति अवलोकयति 'आभोएत्ता' आभोग्य अवलोक्य 'अयमेयारूवे जाव समुप्पज्जित्था' अयमेतावद्रूपो यावत्संकल्पः समुदपद्यत अत्र यावत्पदेन 'अज्झत्थिए चिंतिए पत्थिए कप्पिए मणोगए संकप्पे' इत्यन्तो ग्राह्यः कीदृशो मनो-

---

देश होने में कोई विरोध नहीं है। अपितु ये दोनों वहां सुसंगत ही हैं, ऐसा सम्यग्दृष्टि देव के मन का अभिप्राय है। 'तं मायिमिच्छादिट्ठि उववन्नगं एवं पडिहणइ' इस प्रकार स्याद्वादमत के आश्रय से उस सम्यग् दृष्टि देवने उस मायी मिथ्यादृष्टिदेव को पराजित कर दिया। 'एवं पडिहणित्ता' पराजित करके 'ओहिं पउंजइ' फिर उसने अपने अवधिज्ञान को लगाया। 'ओहिं पउंजित्ता' अवधिज्ञान को लगा करके 'ममं' मुझे उसने 'ओहिणा' उस अवधिज्ञान से 'आभोएइ' देखा 'आभोइत्ता' देखकर 'अयमेयारूवे जाव समुप्पज्जित्था' फिर उसने इस प्रकार से विचार किया–यहां यावत्पद से 'अज्झत्थिए, चिंतिए, कप्पिए, पत्थिए, मणोगए, संकप्पे 'इन विचार के विशेषणों का ग्रहण हुआ है। 'एवं खलु समणे भगवं महावीरे' क्या विचार उसे उत्पन्न हुआ–भाव यह है कि 'अज्झत्थिए' आध्यात्मिकः महावीर स्वामी के पास जाऊँ। यह आध्यात्मिक विचार अङ्कुरित जैसा हुआ। 'चिंतिए' चिन्तितः प्रभु के पास जाना आवश्यक है, इस प्रकार पुनः पुनः चिन्तन से द्विपत्रित

---

કોઈ પણ પ્રકારનો વિરોધ રહેતો નથી પરંતુ તે બન્ને ત્યાં સુસંગત જ છે. એવો સમ્યગ્દૃષ્ટિ દેવના મનનો અભિપ્રાય છે. "तं मायि मिच्छादिट्ठि उववन्नगं एवं पडिहणइ" આ રીતે સ્યાદ્વાદ મતના આશ્રયથી તે સમ્યગદૃષ્ટિ દેવે તે માયી મિથ્યાદૃષ્ટિ દેવને પરાજીત કરી દીધો. "एवं पडिहणित्ता" પરાજીત કરીને "ओहिं पउंजइ" પછી તેણે પોતાના અવધિજ્ઞાનનો ઉપયોગ કર્યો "ओहिं पउंजित्ता" અવધિજ્ઞાનનો ઉપયોગ કરીને "ममं" મને ओहिणा" તે અવધિજ્ઞાનથી "आभोएइ" જોયો. "आभोएत्ता" જોઈને "अयमेयारूवे जाव समुप्पज्जित्था" તે પછી તેણે આ પ્રમાણે વિચાર કર્યો અહિંથી યાવત્ પદથી "अज्झत्थिए, चिंतिए, पत्थिए, कप्पिए, मणोगए, संकप्पे" આ વિશેષણોનું ગ્રહણ થયું છે. "एवं खलु समणे भगवं महावीरे" તેને કેવો

गतः संकल्पः प्रादुर्भूतस्त्राह-'एवं खलु' इत्यादि 'एवं खलु समणे भगवं महावीरे एवं खलु श्रमणो भगवान् महावीरः 'जंबूदीवे दीवे' जम्बूद्वीपे द्वीपे 'जेणेव भारहे वासे' यत्रैव भारतं वर्ष क्षेत्रम् 'जेणेव उल्लुयतीरे नयरे' यत्रैव उल्लुकतीरं नाम नगरम् 'जेणेव एगजंबूए चेइए' यत्रैव एकजम्बूकनामकं चैत्यम् 'तेणेव' तत्रैव 'अहापडिरूवं जाव विहरइ' यथाप्रतिरूपं यावद् विहरति, अत्र यावत्पदेन 'उग्गहं उग्गिण्हित्ता संजमेणं तवसा अप्पाणं भावेमाणे' इति ग्राह्यम्, अवग्रहम्, अवगृह्य संयमेन तपसा आत्मानं भावयन्, विहरतीति सम्बन्धः 'तं सेयं खलु मे' तत् श्रेयः खलु मे 'समणं भगवं महावीरं वंदित्ता जाव पज्जुवासित्ता' श्रमणं

जैसा हुवा। 'कप्पिए' कल्पितः धर्मदेशना सुनेंगे इस रूप के कार्याकृति विचार से पल्लवित जैसा हुआ। 'पत्थिए' प्रार्थितः' यों इष्ट साधन रूप में गृहीत होने से पुष्पित जैसा हुआ। 'मणोगए संकप्पे' मनोगतः संकल्पः प्रभु के पास जाकर धर्मदेशना सुनना ही श्रेयस्कर है यों मनमें दृढनिश्चय संकल्प से फलित जैसा हो गया। अब इसी बात की पुष्टि यहां से आगे सूत्रकार करते हैं-इस जंबूद्वीप नाम के द्वीप में स्थित जो 'भारहे वासे' भारतवर्ष नाम का क्षेत्र है, उसमें 'जेणेव उल्लुयतीरे नयरे' उल्लुकतीर नाम का नगर है और उस में भी जो 'एगजंबूए चेइए' एक जंबुक नाम का उद्यान है, उसमें 'अहापडिरूवं जाव विहरइ' यथाप्रतिरूप अवग्रह को धारण करके श्रमण भगवान् महावीर विराजमान हैं यहां यावत्पद से 'उग्गहं उग्गिण्हित्ता संजमेणं तवसा अप्पाणं भावेमाणे' इस पाठ का ग्रहण हुआ है। 'तं सेयं खलु मे समणं भगवं महावीरं वंदित्ता जाव पज्जुवासित्ता' अतः

વિચાર આવ્યો ? તે બાબતનું વર્ણન સૂત્રકાર કરે છે. આ જંબૂદ્વીપ નામના દ્વીપમાં રહેલ "भारहे वासे" ભારત નામનું ક્ષેત્ર છે. તેમાં "जेणेव उल्लुयतीरे नयरे" જ્યાં ઉલ્લુકતીર નામનું નગર છે. અને તેમાં પણ જે "एगजबुए चेइए" એક જંબુક નામનું ઉદ્યાન છે. "अहापडिरूवं जाव विहरइ" યથાપ્રતિરૂપ અવગ્રહને ધારણ કરીને શ્રમણ ભગવાન મહાવીર સ્વામી વિરાજમાન છે. અહિંયા 'યાવત્', પદથી "उग्गहं उग्गिण्हित्ता संजमेणं तवसा अप्पाणं भावेमाणे" આ પાઠનો સંગ્રહ થયો છે. તેનો અર્થ આ પ્રમાણે છે અવગ્રહને-વનપાલની આજ્ઞા ધારણ કરીને સંયમ અને તપથી આત્માને ભાવિત કરીને "तं सेयं खलु मे समणं भगवं महावीरं वंदित्ता जाव पज्जुवासित्ता" જેથી હવે મને એજ યોગ્ય છે કે હું શ્રમણ ભગવાન મહાવીરને

सिद्धिपर्यवसानफलानि प्रज्ञप्तानि अन्ते सिद्धिप्रदानि कथितानि पूर्वतीर्थङ्करैः 'समणाउसो' श्रमण! आयुष्मन्! हे आयुष्मन्! गौतम! संवेगादीनां चरमं फलं मोक्षात्मकमेव भवतीत्यवधार्यमिति भावः। सेवं भंते! सेवं भंते! त्ति' तदेवं भदन्त! तदेवं भदन्त! इति यद् देवानुप्रियेण आख्यातम्, तत् एवमेव-सत्यमेव, इति 'जाव' यावत् कथयित्वा ततो गौतमो भगवन्तं वन्दते नमस्यति, वन्दित्वा नमस्यित्वा संयमेन तपसा आत्मानं 'भावयन्' विहरइ विहरतीति ॥सू. ३॥

सप्तदशशतके तृतीयोदेशकः समाप्तः।

---

साणफला पन्नत्ता' अन्त में सिद्धिरूप पद को देते हैं ऐसा तीर्थकरों का कहना है। हे श्रमण आयुष्मन् गौतम! संवेगादिकों की आराधना का अन्तिम फल आराधक जीव को मुक्ति की प्राप्ति होना ही है, ऐसा निश्चय से जानो। 'सेवं भंते! सेवं भंते! त्ति जाव विहरइ' हे भदन्त आपदेवानुप्रिय ने जो कहा है वह ऐसा ही है-सत्य ही है। हे भदन्त! आप देवानु प्रियने जो कहा है वह ऐसा ही है-सत्य ही है। ऐसा कहकर गौतम ने प्रभु को वन्दना की नमस्कार किया। वन्दना नमस्कार कर के फिर वे संयम एवं तप से आत्मा को भावित करते हुए अपने स्थान पर विराजमान हो गये ॥ सू० ३ ॥

तृतीय उद्देशक समाप्त

---

બધા "सिद्धिपज्जवसाणफला पण्णत्ता" અંતે સિદ્ધિરૂપી ફલ આપનારા છે. એવું તીર્થંકર ભગવાનોનું કહેવું છે. હે શ્રમણ આયુષ્મન્ ગૌતમ! સંવેગ આદિની આરાધક જીવને મુક્તિની પ્રાપ્તિ થવી તેજ છે. એ પ્રમાણે નિશ્ચયથી જાણો. "सेवं भंते! सेवं भंते त्ति जाव विहरइ" હે ભગવન્ આપ દેવાનુપ્રિયે આ વિષયમાં જે કથન કર્યું છે, તે તેમજ છે. અર્થાત્ સત્ય જ છે. હે ભગવન્ આપ દેવાનુપ્રિયે જે કહ્યું છે તે યથાર્થ જ છે. અર્થાત્ તે સઘળું તેમજ છે. આ પ્રમાણે કહીને ગૌતમ સ્વામીએ પ્રભુને વન્દના કરી નમસ્કાર કર્યા વન્દના નમસ્કાર કરીને તે પછી ભગવાન્ ગૌતમ સ્વામી તપ અને સંયમથી પોતાના આત્માને ભાવિત કરતા થકા પોતાને સ્થાને વિરાજમાન થઈ ગયા. ॥ સૂ ૩ ॥

॥ ત્રીજો ઉદ્દેશક સમાપ્ત ॥

अथ चतुर्थोद्देशकः प्रारभ्यते ।

तृतीयोद्देशके एजनादिका क्रिया कथिता चतुर्थोद्देशकेऽपि क्रियैव कथ्यते, इत्येवं संबन्धेन आयातस्यास्य चतुर्थोद्देशकस्येदमादिमं सूत्रम्–'तेणं कालेणं' इत्यादि ।

मूलम्–तेणं कालेणं तेणं समएणं रायगिहे नयरे जाव एवं वयासी अत्थि णं भंते! जीवाणं पाणाइवाएणं किरिया कज्जइ हंता अत्थि। सा भंते! किं पुट्ठा कज्जइ, अपुट्ठा कज्जइ? गोयमा! पुट्ठा कज्जइ नो अपुट्ठा कज्जइ एवं जहा पढमसए छट्ठुद्देसए जाव णो अणाणुपुव्वि कडा ति वत्तव्वं सिया। एवं जाव वेमाणियाणं नवरं जीवाणं एगिंदियाणं य निव्वाघाएणं छद्दिसिं वाघायं पडुच्च सिय तिदिसिं सिय चउदिसिं सिय पंचदिसिं सेसाणं नियमा छद्दिसिं। अत्थि णं भंते! जीवाणं मुसावाएणं किरिया कज्जइ? हंता अत्थि। सा भंते! किं पुट्ठा कज्जइ अपुट्ठा कज्जइ? जहा पाणाइवाएणं दंडओ एवं मुसावाएण वि एवं अदिन्नादाणेण वि, मेहुणेण वि परिग्गहेण वि, एवं एए पंच दंडगा ५। जं समयं णं भंते! जीवाणं पाणाइवाएणं किरिया कज्जइ सा भंते! किं पुट्ठा कज्जइ अपुट्ठा कज्जइ? एवं तहेव जाव वत्तव्वं सिया जाव वेमाणियाणं एवं जाव परिग्गहेणं एवं एते वि पंच दंडगा १०। देसे णं भंते! जीवाणं पाणाइवाएणं किरिया कज्जइ, एवं चेव जाव परिग्गहेणं एवं एते वि पंच दंडगा १५। जं पएसं णं भंते! जीवाणं पाणाइवाएणं

किरिया कज्जइ सा भंते! किं पुट्ठा कज्जइ एवं तहेव दंडओ। एवं जाव परिग्गहेणं२०। एवं एए वीसं दंडगा ॥सू० १॥

छाया—तस्मिन् काले तस्मिन् समये राजगृहे नगरे यावत् एवमवादीत्, अस्ति खलु भदन्त! जीवानां प्राणातिपातेन क्रिया क्रियते? हन्त अस्ति। सा भदन्त! किं स्पृष्टा क्रियते अस्पृष्टा क्रियते? गौतम! स्पृष्टा क्रियते नो अस्पृष्टा क्रियते! एवं यथा प्रथमशतके षष्ठोद्देशके यावत् नो अनानुपूर्वीकृता इति वक्तव्यं स्यात् एवं यावत् वैमानिकानाम् नवरं जीवानामेकेन्द्रियाणां च निर्व्याघातेन षड्दिशं व्याघातं प्रतीत्य स्यात् त्रिदिशम् स्यात् चतुर्दिशम् स्यात् पञ्चदिशम् शेषाणां नियमात् षड्दिशम्। अस्ति खलु भदन्त! जीवानां मृषावादेन क्रिया क्रियते। हन्त, अस्ति। सा भदन्त! किं स्पृष्टा क्रियते अस्पृष्टा क्रियते यथा प्राणातिपातेन दण्डकः। एवं मृषावादेनापि। एवमदत्तादानेनापि। मैथुनेनापि परिग्रहेणापि। एवमेते पञ्चदण्डकाः ५। यस्मिन् समये खलु भदन्त! जीवानां प्राणातिपातेन क्रिया क्रियते सा भदन्त! किं स्पृष्टा क्रियते अस्पृष्टा क्रियते? एवं तथैव यावत् वक्तव्यं स्यात् यावत् वैमानिकानाम् एवं यावत् परिग्रहेण एवमेतेऽपि पञ्चदण्डकाः १०। यस्मिन् देशे खलु भदन्त! जीवानां प्राणातिपातेन क्रिया क्रियते, एवमेव यावत् परिग्रहेण एवं एतेऽपि पञ्चदण्डकाः १५। यस्मिन् प्रदेशे खलु भदन्त! जीवानाम् प्राणातिपातेन क्रिया क्रियते सा भदन्त! किं स्पृष्टा क्रियते, अस्पृष्टा क्रियते? एवं तथैव दण्डकः, एवं यावत् परिग्रहेण २०। एवम् एते विंशतिर्दण्डकाः ॥सू० १॥

---

## चौथे उद्देशे का प्रारंभ

तृतीय उद्देशे में एजनादिक क्रियाओं के सम्बन्ध में कथन किया गया है। इस चतुर्थ उद्देशे में क्रियाओं के विषय में कथन होना है- अतः इसी सम्बन्ध से इस चतुर्थ उद्देशे का प्रारम्भ हुआ है।

'तेणं कालेणं तेणं समएणं' इत्यादि।

---

## ચોથા ઉદ્દેશાનો પ્રારંભ

ત્રીજા ઉદ્દેશામાં એજનાદિ ક્રિયાઓના સંબંધમાં કથન કરવામાં આવ્યું છે. આ ચોથા ઉદ્દેશામાં પણ ક્રિયાઓના વિષયમાં જ કથન કરવામાં આવશે જેથી આ સંબંધને લઈને આ ચોથા ઉદ્દેશાનો પ્રારંભ કરવામાં આવે છે.

"तेणं कालेणं तेणं समएणं" इत्यादि

टीका—'तेणं कालेणं तेणं समएणं' तस्मिन् काले तस्मिन् समये 'रायगिहे नयरे' राजगृहं नगरम् 'जाव एवं वयासी' यावदेवं–वक्ष्यमाणप्रकारेण अवादीत् अत्र यावत्पदेन 'गुणसिलए चेइए सामी समोसढे' इत्यारभ्य 'पंजलिउडे' इत्यन्तः सर्वोऽपि सन्दर्भोऽनुस्मरणीयः, किमवादीत्तत्राह–'अत्थि णं भंते !' इत्यादि। 'अत्थि णं भंते !' अस्ति खलु भदन्त ! 'जीवाणं पाणाइवाएणं किरिया कज्जइ' जीवानां प्राणातिपातेन क्रिया क्रियते प्राणातिपातः प्राणिनां विराधनम् तेन प्राणातिपातकरणेन क्रिया क्रियते-भवति बद्ध्यते इति यावत्, प्राणातिपातेन प्राणिनाम् अशुभा क्रिया समुत्पद्यते इत्येवमस्ति किमितिभावः, भगवानाह–'हंता' इत्यादि। 'हंता अत्थि' हन्त अस्ति हे गौतम ! प्राणातिपातकरणेन जीवानां क्रिया भवत्येवेति भावः। 'सा भंते ! किं पुट्ठा कज्जइ अपुट्ठा कज्जइ' सा किं स्पृष्टा क्रियते भवति अस्पृष्टा वा क्रियते भवतीति प्रश्नः, भगवानाह–'गोयमा !' हे गौतम ! 'पुट्ठा कज्जइ नो अपुट्ठा कज्जइ' स्पृष्टा क्रियते नो

---

टीकार्थ––'तेणं कालेणं तेणं समएणं' उस काल में और उस समय में 'रायगिहे नयरे जाव एवं वयासी' भगवान् गौतमने यावत् इस प्रकार से पूछा 'अत्थि णं भंते ! जीवाणं पाणाइवाएणं किरिया· कज्जइ' हे भदन्त ! जीव प्राणातिपात द्वारा क्रिया की जाती हैं अर्थात् कर्म बंधते हैं ? हंता अत्थि' हां गौतम ! जीव प्राणाति पात द्वारा कर्म बांधते हैं। 'सा भंते ! किं पुट्ठा कज्जइ अपुट्ठा कज्जइ' हे भदन्त ! वह क्रिया–कर्म जिसे जीव प्राणातिपात द्वारा करते हैं–वह स्पृष्ट हुई करते हैं–या अस्पृष्ट हुई करते हैं–'गोयमा ! पुट्ठा कज्जइ, नो अपुट्ठा कज्जइ'

---

ટીકાર્થ––"तेणं कालेणं तेणं समएणं" તે કાળમાં અને તે સમયમાં "रायगिहे नयरे जाव एवं वयासी" રાજગૃહ નગરમાં ભગવાનનું સમવસરણ થયું. ભગવાનનું આગમન સાંભળીને પરિષદ તેઓના દર્શન અને વંદના કરવા માટે આવી. ભગવાને ધર્મ દેશના આપી. તે પછી ભગવાનને વંદના નમસ્કાર કરીને પરિષદ પોત પોતાના સ્થાને પાછી ગઈ ત્યાર પછી ભગવાનની પર્યુપાસના કરતાં ગૌતમસ્વામીએ ભગવાનને આ પ્રમાણે પૂછયું. "अत्थि णं भंते ! जीवाणं पाणाइवाएणं किरिया कज्जइ" હે ભગવન્ ! જીવ પ્રાણાતિપાત દ્વારા ક્રિયા–કર્મનો બંધ બાંધે છે ? "हंता अत्थि" હા ગૌતમ ! જીવ પ્રાણાતિપાત દ્વારા કર્મનો બંધ બાંધે છે. "सा भंते ! किं पुट्ठा कज्जइ अपुट्ठा कज्जइ" હે ભગવન્ ! તે ક્રિયા–કર્મ જેને જીવ પ્રાણાતિપાત દ્વારા બાંધે છે. તે સ્પૃષ્ટ થઈને કરે છે. કે અસ્પૃષ્ટ થઈને કરે છે ? ગોયમા ! पुट्ठा कज्जइ नो अपुट्ठा

अस्पृष्टा क्रियते या काचनक्रिया भवति सा सर्वापि आत्मप्रदेशसंवद्धैव भवति नो असंवद्धा भवतीति भावः 'एवं जहा पढमसए छट्ठुद्देसए जाव णो अणाणुपुव्विकडा त्ति वत्तव्वं सिया' एवं यथा प्रथमशते षष्ठोदेशके यावत् नो अनानुपूर्वीकृता इति वक्तव्यं स्यात् प्रथमशतके षष्ठोदेशकेऽपि 'जाव निव्वाघाएणं' इत्यादि। पाठो लभ्यते तत्र 'जाव' इति यावत्, अत्र यावत्पदेन विवक्षितपाठः संग्राह्यः, तथाहि-'सा भंते ! किं ओगाढा कज्जइ अणोगाढा कज्जइ ? गोयमा ! ओगाढा कज्जइ नो अणोगाढा कज्जइ. एवं अणंतरोगाढा कज्जइ नो परंपरोगाढा कज्जइ। सा भंते ! अणुं कज्जइ बायरं कज्जइ ? गोयमा ! अणुं पि कज्जइ बायरंपि कज्जइ सा भंते ! किं उड्ढं कज्जइ तिरियं कज्जइ, अहे कज्जइ गोयमा ! उड्ढंपि कज्जइ तिरियंपि कज्जइ अहे वि कज्जइ। सा भंते ! किं आइं कज्जइ मज्झे कज्जइ अंते कज्जइ ? गोयमा ! आइंपि कज्जइ मज्झे वि कज्जइ अंते वि कज्जइ। सा भंते ! किं सविसए कज्जइ अविसए कज्जइ ? गोयमा ! सविसए कज्जइ नो अविसए कज्जइ निव्वाघाएणं छद्दिसिं, वाघायं पडुच्च सिय तिदिसिं सिय चउदिसिं सिय पंचदिसिं। सा भंते ! किं कडा कज्जइ अकडा कज्जइ ? गोयमा कडा कज्जइ नो अकडा कज्जइ। सा भंते ! किं अत्तकडा कज्जइ परकडा कज्जइ ? गोयमा ! अत्तकडा कज्जइ णो परकडा कज्जइ नो तदुभयकडा कज्जइ। सा भंते ! किं आणुपुव्विकडा कज्जइ अणाणुपुव्विकडा कज्जइ ? गोयमा ! आणुपुव्विकडाकज्जइ नो अणाणुपुव्विकडा कज्जइ जायकडा, जाय कज्जइ, जाय कज्जिस्सइ सव्वा सा आणुपुव्विकडा कज्जइ नो अणाणुपुव्विकडा त्ति वत्तव्वं सिया' इत्यन्तः सन्दर्भोऽत्र अनुसन्धेयः। अस्य व्याख्या प्रथमशतकस्य षष्ठोद्देशके द्वितीयसूत्रस्य मत्कृतायां प्रमेयचन्द्रिकाटीकायां द्रष्टव्यम्। 'एवं जाव वेमाणियाणं'

---

हे गौतम ! वह स्पृष्ट हुई की जाती है अस्पृष्ट हुई नहीं की जाती है। 'एवं जहा पढमसए छट्ठुद्देसए जाव अणाणुपुव्विकडा त्ति वत्तव्वं सिया' इत्यादि सब कथन जैसा कि प्रथम शतक के छठे उद्देशे में कहा गया है वैसा ही यहां पर कह लेना चाहिये, यावत् वह क्रिया अनुक्रम से होती है। अनुक्रम के विना नहीं होती है। 'एवं जाव वेमा-

---

कज्जइ" હે ગૌતમ ! તે ક્રિયા સ્પૃષ્ટ થઈને કરાય છે. અસ્પૃષ્ટ થઈને કરવામાં આવતી નથી "एव जहा पढमसए छट्ठुद्देसए जाव णो अणाणुपुव्विकडात्ति वत्तव्व सिया" વિગેરે સઘળું કથન પહેલા શતકના છટ્ઠા ઉદ્દેશામાં જેવી રીતે કહેવામાં આવ્યું છે તેવી જ રીતે અહિયાં પણ સમજવું. યાવત્ તે ક્રિયા અનુક્રમથી થાય છે. અનુક્રમ વિના થતી નથી. "एवं जाव वेमाणियाणं"

एवं यावद् वैमानिकानाम् सामान्यजीवविषये प्राणातिपातेन क्रिया भवतीति यथा कथितं तथैव वैमानिकपर्यन्तचतुर्विंशतिदण्डके जीवविषये च बोद्धव्यम् 'नवरं जीवाणं एगिंदियाणय निव्वाघाएणं छद्दिसिं' विशेषस्तु जीवानामेकेन्द्रियाणां च निर्व्याघातेन षड्दिशम् जीवानां समुच्चयानाम् एकेन्द्रियाणां च व्याघाताभावे नियमतः षट्स्वपि दिक्षु प्राणातिपातेन क्रियाभवति 'वाघायं पडुच्च सिय तिदिसिं' व्याघातं प्रतीत्य स्यात् त्रिदिशम् व्याघाते सति त्रिदिश्येव क्रिया भवति 'सिय चउद्दिसिं' स्यात् चतुर्दिशम् 'सिय पंचदिसिं' स्यात् पञ्चदिशम्। व्याघाताभावे सति एकेन्द्रियाणां जीवानां च नियमतः षट्स्वपि दिक्षु प्राणातिपातेन क्रिया भवति व्याघाते सति तु यत्र यत्र व्याघातस्तं तं परित्यज्य शेषदिशासु प्राणातिपातेन क्रिया भवति यदि एकदिशि व्याघातो भवेत् तदा पंचदिशि क्रिया जायते, यदि दिग्द्वये व्याघातः तदा चतुर्दिक्षु प्राणातिपातेन क्रिया यदि दिक्त्रये व्याघातस्तदा त्रिदिक्षु क्रिया व्याधिकव्याघाताभावात् यदि न कुत्रापि व्याघातस्तदा नियमतः षट्सु दिक्ष्वपि प्राणातिपातेन क्रिया जायते इतिभावः। व्याघातस्तु विदिक्षु व्याघातः अलोकस्तथा च दिकोणेऽवस्थितो जीवो भवति तदा तस्य दिक्त्रये अलोकव्याप्ततया शेपदिक्त्रये एव प्राणातिपातेन क्रिया जायते यदा यत्र दिग्द्वये अलोकः तदा चतुर्दिक्षु क्रिया स्यात् यदा तु एकत्रैव व्याघातस्तदा शेषपञ्चदिक्षु क्रिया, यदा तु जीवः मध्येऽवस्थितो भवति सामान्यतः प्रतिबन्धकस्य अलोकस्याभावात् तदा षट्-

---

णियाणं' इसी प्रकार यावत् वैमानिकों तक जानना चाहिये। 'नवरं, जीवाणं एगिंदियाणय निव्वाघाएणं छद्दिसिं वाघायं पडुच्च सिय तिदिसिं सिय चउद्दिसिं सिय पंचदिसिं सेसाणं नियमा छद्दिसिं' परन्तु विशेषता ऐसी है कि जीव और एकेन्द्रिय प्रतिबन्ध के बिना छहों दिशाओं से आये हुए कर्म परमाणुओं का बन्ध करते हैं और यदि प्रतिबन्ध हो तो कदाचित् तीन दिशा से, कदाचित् चार दिशा से और कदाचित् पांच दिशा में से आये हुए कर्म पुद्गलों का बन्ध करते हैं। शेष जीव

---

એજ રીતનું કથન યાવત્ વૈમાનિકો સુધી સમજી લેવું. "नवरं जीवाणं एगेंदियाण य निव्वाघाएणं छद्दिसिं वाघायं पडुच्च सिय तिदिसिं सिय चउदिसिं, सिय पंचदिसिं सेसाणं नियमा छद्दिसिं" પરંતુ તેમાં વિશેષતા એવી રીતે છે કે જીવ અને એકેન્દ્રિય પ્રતિબંધ સિવાય છએ દિશાઓથી આવેલા કર્મ-પરમાણુઓનો બંધ કરે છે. અને જો પ્રતિબંધ હોય તો કદાચિત્ ત્રણ દિશાથી ને કોઈક વાર ચાર દિશાથી તેમજ કોઈક વાર પાંચ દિશાથી આવેલા કર્મ પરમાણુઓનો બંધ કરે છે. ને બાકીના જીવ છએ દિશાથી

स्वपि दिक्षु क्रिया भवति। 'सेसाणं नियमा छद्दिसिं' शेषाणां नियमतः षट्-दिशम् शेषाणाम् व्याघाताभावेन लोकमध्यस्थितानां नियमतः षट्स्वपि दिक्षु प्राणातिपातेन क्रिया भवति इति। 'अत्थि णं भंते! जीवाणं मुसावाएणं किरिया कज्जइ' अस्ति खलु भदन्त! जीवानां मृषावादेन क्रिया क्रियते मृषावादेन जीवानाम् क्रिया भवति। किमिति प्रश्नः, भगवानाह-'हंता' इत्यादि। 'हंता अत्थि' हन्त, अस्ति मृषावादेन जीवानां क्रिया भवत्येवेति भावः। 'सा भंते! किं पुट्ठा कज्जइ अपुट्ठा कज्जइ' सा क्रिया भदन्त! स्पृष्टा क्रियतेऽस्पृष्टा वा क्रियते इति प्रश्नः। भगवानाह-'जहा' इत्यादि। 'जहा पाणाइवाएणं दंडओ एवं मुसावाएण वि' यथा प्राणातिपातेन दण्डकः एवं मृषावादेनापि मृषावादेन या क्रिया क्रियते सा स्पृष्टैव क्रियते नो अस्पृष्टा क्रियते यथा प्राणातिपातमाश्रित्य षष्ठोद्देशकस्य प्रकरणम् स्मारितं तथैव मृषावादमाश्रित्यापि तत्रत्यं सर्वमेव प्रकरणमिहापि ज्ञातव्यमिति भावः। 'एवं अदिन्नादाणेण वि' एवमदत्तादानेनापि दण्डको भणितव्यः, 'एवं मेहुणेण वि' एवं मैथुनेनापि मैथुनेनापि एवमेव प्राणातिपातवदेव दण्डको भणितव्यः 'परिग्गहेण वि' परिग्रहेणापि एवमेव दण्डको भणितव्यः। 'एवं एए पंचदंडगा' एवम् एते पंचदंडकाः एवमुक्तेन प्रकारेण एते प्राणातिपातादारभ्य परिग्रहान्ताः पञ्चदण्डका भवन्ति ५। 'जं

---

छहों दिशाओं में से आये हुए कर्मपुद्गलों को ग्रहण करते हैं ऐसा नियम है। 'अत्थि णं भंते! जीवाणं मुसावाएणं किं किरिया कज्जइ' हे भदन्त! जीवों के क्या मृषावाद से कर्म का बन्ध होता है? 'हंता अत्थि' हां, गौतम! जीवों के मृषावाद से कर्म का बन्ध होता है। 'सा भंते! किं पुट्ठा कज्जइ, अपुट्ठा कज्जइ' हे भदन्त! वह कर्म स्पृष्ट हुआ बंधता है या अस्पृष्ट हुआ बंधता है? 'जहा पाणाइवाएणं दंडओ, एवं मुसावाएण वि एवं अदिन्नादाणेण वि मेहुणेण वि, परिग्गहेण वि, एवं एए पंचदंडगा ५' हे गौतम! इस सम्बन्ध में जैसा कथन प्राणातिपात

---

આવેલા પુદ્ગલોને ગ્રહણ કરે છે. એવો નિયમ છે. "अत्थि णं भंते! जीवाणं मुसावाएणं किरिया कज्जइ" હે ભગવન્ મૃષાવાદથી જીવોને શું કર્મનો બંધ થાય છે? "हंता अत्थि" હા ગૌતમ! મૃષાવાદથી કર્મનો બંધ થાય છે. "सा भंते! किं पुट्ठा कज्जइ अपुट्ठा कज्जइ" હે ભગવન્ તે કર્મનો બંધ સ્પૃષ્ટ થઈને થાય છે? કે અસ્પૃષ્ટ થઈને થાય છે? "जहा पाणाइवाएणं दंडओ, एवं मुसावाएण वि एवं अदिन्नादाणेण वि मेहुणेण वि, परिग्गहेण वि एवं एए पंच दंडगा"५, હે ગૌતમ! આ સંબંધમાં જેવી રીતનું કથન પ્રાણાતિપાત દંડકથી કહેવામાં આવ્યું છે, એજ રીતથી મૃષાવાદ, અદત્તાદાન,

समयं णं भंते !' यं समयं खलु भदन्त ! अत्र द्वितीया विभक्तेः सप्तम्या व्यत्ययः करणीयः तथा च 'यस्मिन् समये भदन्त !' इत्यर्थो भवति 'जीवाणं पाणाइवाएणं किरिया कज्जइ' जीवानाम् प्राणातिपातेन क्रिया क्रियते 'सा किं पुट्ठा कज्जइ अपुट्ठा कज्जइ' सा किं स्पृष्टा क्रियते अस्पृष्टा क्रियते इति प्रश्नः, भगवानाह-'एवं तहेव जाव वत्तव्वं सिया' एवं तथैव यावत् वक्तव्यं स्यात्, एवमत्रैव पूर्वं प्राणातिपातक्रियाटीकायां संगृहीतम् 'वत्तव्वं सिया' इति पर्यन्तं सर्वमेव बोद्धव्यम्। कियत्पर्यन्तमित्याह-'जाव वेमाणियाणं' यावद् वैमानिकानाम्, इह यावत्पदेन एकेन्द्रियजीवादारभ्य वैमानिकपर्यन्तचतुर्विंशतिदण्डकेषु तथा च यथा सामान्यजीवप्रकरणे 'यस्मिन् समये प्राणातिपातेन क्रिया क्रियते सा स्पृष्टैव क्रियते नो अस्पृष्टा' इत्यादिकं कथितं तत्सर्वं वैमानिकपर्यन्तजीव-

---

दण्डक से कहा जा चुका है। उसी प्रकार का कथन मृषावाद दण्डक से भी कह लेना चाहिये-इसी प्रकार से अदत्तादान, मैथुन और परिग्रह के सम्बन्ध में भी दण्डक कहलेना चाहिये। इस प्रकार से ये ५ दण्डक हो जाते हैं। 'जं समयं णं भंते ! जीवाणं पाणाइवाएणं किरिया कज्जइ, सा भंते ! किं पुट्ठा कज्जइ, अपुट्ठा कज्जइ' हे भदन्त ! जीव जिस समय प्राणातिपात से कर्म का बन्ध करता है उस समय वह स्पृष्ट हुए कर्म का बन्ध करता है या अस्पृष्ट हुए कर्म का बन्ध करता है? 'एवं तहेव जाव वत्तव्वं सिया, जाव वेमाणियाणं एवं जाव परिग्गहेणं, एवं एए वि पंच दंडगा १०' हे गौतम! इस विषय में उत्तर पहिले कहे गये उत्तर के जैसा ही जानना चाहिये। यावत् वह कर्मबन्ध अनुक्रम के विना नहीं होता है अनुक्रम से ही होता है। इसी प्रकार का कथन यावत् वैमानिकों तक के कर्मबन्ध के विषय में भी जानना चाहिए।

---

મૈથુન અને પરિગ્રહના સંબંધમાં પણ દંડકો બનાવીને કહી લેવા. એ રીતે આ પાંચ દંડકો થાય છે 'जं समयं णं भंते ! जीवाणं पाणाइवाएणं किरिया कज्जइ, सा भंते! किं पुट्ठा कज्जइ, अपुट्ठा कज्जइ'' હે ભગવન્ જે સમયે જીવ પ્રાણાતિપાતથી કર્મનો બંધ કરે છે, તે સમયે તે સ્પૃષ્ટ થઈને કર્મનો બંધ કરે છે? કે અસ્પૃષ્ટ થઈને કર્મનો બંધ કરે છે? ''एवं तहेव जाव वत्तव्वं सिया, जाव वेमाणियाणं एवं जाव परिग्गहेणं एवं एए वि पंच दंडगा'' હે ગૌતમ! આ વિષયમાં પહેલા જે પ્રમાણે કહેવામાં આવ્યું છે તે પ્રમાણેનો ઉત્તર સમજી લેવો. યાવત્ તે કર્મ બંધ અનુક્રમથી સ્પૃષ્ટ થાય છે. અનુક્રમ વિના થતો નથી. એજ કથન પ્રમાણેનું યાવત્ વૈમાનિકો સુધીના કર્મબન્ધના વિષયમાં સમજી લેવું. યાવત્ પરિગ્રહથી જે સમયે

प्रकरणेऽपि बोधव्यम् । 'एवं जाव परिग्गहेणं' एवं यावत् परिग्रहेण, अत्र यावत् पदेन 'मुसावाएण वि अदत्तादाणेण वि एवं मेहुणेण वि' इत्येतेषां ग्रहणं भवति मृषावादेन यस्मिन् समये क्रिया क्रियते तस्मिन् समये सा क्रिया किं स्पृष्टा भवति अस्पृष्टा वेति प्रश्नः, गौतम ! तस्मिन् समये स्पृष्टैव क्रिया भवति नो अस्पृष्टेत्यादि सर्वं प्रकरणान्तं भगवत उत्तरं विज्ञेयम् 'एवं एए वि पंचदंडगा' एवमेतेऽपि पञ्चदण्डकाः समयमाश्रित्य प्राणातिपातमृषावादादत्तादानमैथुन-परिग्रहघटिता इहापि पञ्चदण्डका भवन्तीति १० । प्राणातिपातादिपरिग्रहपर्य-न्तानां प्रत्येकं विस्तरो विचारः पूर्वप्रदर्शितरीत्या स्वयमेव करणीयः । समये जीवानां प्राणातिपातादिना क्रिया क्रियते सा स्पृष्टा भवति नो अस्पृष्टा, इति विचार्य अतः परं देशप्रदेशविषये प्राणातिपातादिना क्रिया भवति तद्विषये दर्श-यितुमाह-'जं देसेणं भंते !' इत्यादि । 'जं देसे णं भंते !' यस्मिन् देशे खलु भदन्त ! 'जीवाणं पाणाइवाएणं किरिया कज्जइ' जीवानां प्राणातिपातेन क्रिया क्रियते यस्मिन् देशे देशविभागे जीवानां प्राणातिपातादिना क्रिया क्रियते तस्मिन् देशे किं सा क्रिया स्पृष्टा भवति अस्पृष्टा वा भवतीति गौतमस्य प्रश्नः, भगवानाह-'एवं चेव' इत्यादि । 'एवं चेव' एवमेव हे गौतम ! यथा समयमा-श्रित्य जीवानाम् प्राणातिपातेन स्पृष्टैव सा क्रिया भवति न तु अस्पृष्टा सा

---

तथा यावत् परिग्रह से जिस समय जीव कर्म का बन्ध करता है वह स्पृष्ट हुए कर्म का बन्ध करता है या अस्पृष्ट हुए कर्म का बन्ध करता है ? तो इसका उत्तर भी ऐसा ही है कि वह स्पृष्ट हुए कर्म का बन्ध करता है, अस्पृष्ट हुए कर्म का बन्ध नहीं करता है ऐसा जानना चाहिये इस प्रकार से भी ५ दण्डक हो जाते हैं । 'जं देसे णं भंते ! जीवाणं पाणाइ-वाएणं किरिया कज्जइ' हे भदन्त ! जिस देश में-क्षेत्र में जीव प्राणा-तिपात द्वारा कर्म का बन्ध करता है वह कर्म स्पृष्ट होता है या अस्पृष्ट होता ? 'एवं चेव-जाव परिग्गहेणं एए वि पंचदंडगा १५' हे गौतम !

---

જીવ કર્મના બંધ કરે છે, તે સ્પૃષ્ટ થયેલ કર્મનો બંધ કરે છે ? અથવા અસ્પૃષ્ટ થઈને કર્મનો બંધ કરે છે ? તેનો ઉત્તર પણ એ પ્રમાણે છે કે -સ્પૃષ્ટ થયેલ કર્મનો બંધ કરે છે, અસ્પૃષ્ટ થયેલ કર્મનો બંધ કરતો નથી તેમ સમજવું. આ રીતે આના પણ પાંચ દંડક બને છે "जं देसे णं भंते! जीवाणं पाणाइवाएणं किरिया कज्जइ" હે ભગવન્ જે દેશમાં-ક્ષેત્રમાં જીવ પ્રાણાતિપાત દ્વારા કર્મનો બંધ કરે છે, તે કર્મ સ્પૃષ્ટ થાય છે ? કે અસ્પૃષ્ટ થાય છે ? "एवं चेव जाव परिग्गहेणं एए वि पंच दंडगा ११५"

भवति इत्यादि कथितं तथैव देशमाश्रित्यापि जीवानां प्राणातिपातेन जायमाना क्रिया स्पृष्टैव भवति नत्वस्पृष्टा, इत्यादि विचारः पूर्ववदेव इहापि ज्ञातव्यः 'जाव परिग्गहेण' यावत् परिग्रहेण यथा प्राणातिपातेन क्रिया स्पृष्टा भवति नो अस्पृष्टा इत्यादि तथा मृषावादादत्तादानमैथुनपरिग्रहैरपि प्रकरणं देशाश्रयेण निर्मातव्यम् 'एवं एए वि पंच दंडगा' एवमेतेऽपि प्राणातिपातादारभ्य परिग्रह-पर्यन्तं पञ्चदण्डकाः देशविषयेऽपि भवन्ति १५। अतः परं प्रदेशमाश्रित्याह–'जं पएसं णं भंते !' इत्यादि। 'जं पएसं णं भंते !' यस्मिन् प्रदेशे खलु भदन्त ! 'जीवाणं पाणाइवाएणं किरिया कज्जइ' जीवानां प्राणतिपातेन क्रिया क्रियते 'सा भंते ! किं पुट्ठा कज्जइ अपुट्ठा कज्जइ ?' सा क्रिया भदन्त ! किं स्पृष्टा क्रियते अस्पृष्टा क्रियते ? हे भदन्त ! यस्मिन् क्षेत्रैकभागे प्रदेशे जीवानां प्राणा-तिपातेन क्रिया क्रियते सा किं स्पृष्टा क्रियते अस्पृष्टा क्रियते इत्यादि प्रश्नः, भगवानाह–'एवं तहेव दंडओ' एवं तथैव दण्डकः एवं शब्दः संपूर्णस्यापि पूर्व-प्रकरणस्य सूचकः तथाहि यथा समयदेशौ आश्रित्य जीवानां प्राणातिपातेन जाय-माना क्रिया कथिता तथा प्रदेशमाश्रित्यापि जीवानां प्राणातिपातेन क्रिया विष-

---

इस सम्बन्ध में भी कथन पहिले किये गये कथन जैसा ही जानना चाहिये। इस प्रकार यहां पर भी यावत् परिग्रह तक ५ दण्डक होते हैं। 'जं पएसे णं भंते ! जीवाणं पाणाइवाएणं किरिया कज्जइ, सा भंते ! किं पुट्ठा कज्जइ, एवं तहेव दंडओ एवं जाव परिग्गहेणं २०' हे भदन्त ! जीव जिस प्रदेश में प्राणातिपात द्वारा कर्म का बन्ध करता है सो वह स्पृष्ट हुए कर्म का बन्ध करता है या अस्पृष्ट हुए कर्म का बन्ध करता है ? इसका उत्तर देते हुए प्रभु कहते हैं कि हे गौतम ! इस सम्बन्ध में भी पूर्वोक्तानुसार उत्तर जानना चाहिये। और ऐसा ही कथन प्रदेश

---

હે ગૌતમ આ વિષયમાં પણ પહેલા કહેલા કથન પ્રમાણે સઘળું કથન સમજવું એ રીતે અહિયાં પણ યાવત્ પરિગ્રહ સુધી પાંચ દંડકો બને છે "जं पएसे णं भंते ! जीवाणं पाणाइवाएणं किरिया कज्जइ सा भंते किं पुट्ठा कज्जइ एवं तहेव दंडओ एवं जाव परिग्गहेणं२०" હે ભગવન્ જીવ જે પ્રદેશમાં પ્રાણાતિપાતથી કર્મનો બંધ કરે છે, તો તે સ્પૃષ્ટ થઈને બંધ કરે છે ? કે અસ્પૃષ્ટ થઈને કર્મબંધ કરે છે ? તેનો ઉત્તર આપતાં પ્રભુ કહે છે કે–હે ગૌતમ ! આ વિષયમાં પણ પૂર્વોક્ત ઉત્તર પ્રમાણે જ વાકય સમજી લેવું. અને એજ રીતનું કથન પ્રદેશનો આશ્રય કરીને યાવત્ પરિગ્રહ દ્વારા થવાવાળા કર્મ બંધના વિષયમાં

येऽपि सर्वं बोद्धव्यम् 'एवं जाव परिग्गहेणं' एवं यावत् परिग्रहेण अत्र यावत् पदेन मृषावादादत्तादानमैथुनानां संग्रहः यथा प्राणातिपातेन देशविषये दण्डकः कथितस्तथैव मृषावादाद्याश्रयणेन प्रदेशविषयेऽपि दण्डको ज्ञातव्यः ततश्च प्रदेश-विषयेऽपि प्राणातिपातादारभ्य परिग्रहान्तपञ्चपदार्थेन पञ्चदण्डका भवन्तीति २० । 'एवं एए वीसं दंडगा' एवम् एते विंशतिर्दण्डका भवन्ति २० । विंशतिश्च दण्डका इत्थम् सामान्यतो जीवानां प्राणातिपातादि घटित एको दण्डकपञ्चकः ५ । समयघटितो द्वितीयो दण्डकपञ्चकः १०, देशघटितस्तृतीयो दण्डकपञ्चकः १५, प्रदेशघटितश्चतुर्थो दण्डकपञ्चकः २० इति चतुः संख्यायाः पञ्चसंख्यया गुणने कृते विंशतिरेव दण्डका भवन्तीति ॥सू० १॥

---

को आश्रित करके यावत् परिग्रह द्वारा होनेवाले कर्मबन्ध के विषय में भी जानना चाहिये । 'एवं एए वीसं दंडगा' इस प्रकार से ये सामान्य पांच दण्डक तथा समय, देश और प्रदेश को लेकर हुए ५-५-५ कुल मिलकर २० दण्डक होते हैं ।

इस सूत्र द्वारा गौतम ने प्रभु से प्राणातिपात आदि क्रियाओं से जायमान कर्मबन्ध के विषय में पूछा है-अतः यह प्रश्न उन्होंने कहां पूछा इस विषय की संगति बैठाने के लिये सूत्रकार कहते हैं-'तेणं कालेणं तेणं समएणं' उस काल और उस समय में 'रायगिहे नयरे' राजगृह नामका नगर था । उस नगर में 'जाव एवं वयासी' उन्होंने यावत् प्रभु से इस प्रकार पूछा-यहां यावत् शब्द से 'गुणसिलए चेइए सामी समोसढे' यहां से लेकर 'पंजलिउडे' यहां तक का पाठ लिया गया है

---

સમજવું. "एवं एए वीसं दंडगा" આ પ્રમાણે સામાન્ય પાંચ દંડક તથા સમય, દેશ, અને પ્રદેશની સાથેના ૫-૫-૫ એમ આ પંદર મળીને કુલ વીસ દંડકો બને છે.

આ સૂત્ર દ્વારા ગૌતમ સ્વામીએ પ્રભુને પ્રાણાતિપાત વિગેરે ક્રિયાઓથી થવાવાળા કર્મબંધના વિષયમાં પૂછયું છે. જેથી આ પ્રશ્ન તેઓએ કયાં પૂછયો ? આ વિષયની સંગતી બેસારવા સૂત્રકાર કહે છે કે-"तेणं कालेणं तेणं समएणं" તે કાલે અને તે સમયે "रायगिहे नयरे" રાજગૃહ નામનું નગર હતું તે નગરમાં "जाव एवं वयासी" તેઓએ યાવત્ પ્રભુને આ પ્રમાણે પૂછયું. અહિયાં યાવત્ શબ્દથી 'गुणसिलए चेइए सामी समोसढे" આ પાઠથી લઈને "पंजलिउडे" અહિં સુધીનો પાઠ ગ્રહણ થયો છે. "अत्थि णं भंते !

'अत्थि णं भंते ! जीवाणं पाणाइवाएणं किरिया कज्जइ' हे भदन्त ! जीवों को प्राणातिपात द्वारा अशुभ क्रिया-उत्पन्न होती है-बंधती है ऐसा है क्या ? प्राणातिपात-जीवों की विराधना-करने से कर्म का बन्ध होता है ऐसी बात है क्या ? इसके उत्तर में प्रभु कहते हैं-हंता, अत्थि' हां, गौतम ! प्राणातिपात से जीवों को कर्म का बन्ध होता है।

अब गौतम ! इस विषय में प्रभु से ऐसा पूछते हैं-'सा भंते ! किं पुट्ठा कज्जइ अपुट्ठा कज्जइ' हे भदन्त प्राणातिपात द्वारा जो अशुभ क्रिया जीवों को बंधती है वह अशुभ क्रिया क्या उनके आत्मप्रदेशों से संबद्ध होकर ही बंधती है या असंबद्ध होकर बंधती है ? उत्तर में प्रभु कहते हैं—'पुट्ठा कज्जइ नो अपुट्ठा कज्जइ' हे गौतम ! जितनी भी क्रियाएँ होती हैं-वे सब आत्मप्रदेशों से संबद्ध ही होती है-इस प्रकार प्राणातिपात द्वारा जायमान वह कर्मबन्धरूप अशुभ क्रिया आत्म-प्रदेश से संबद्ध होकर नहीं बंधती है तात्पर्य कहने का यह है कि प्राणा-तिपात आदि पापस्थानों से जो कर्म का बन्ध होता है वह क्षीर नीर के जैसे आत्मप्रदेशों के साथ एक क्षेत्रावगाहरूप से होता है। किन्तु जैसा नवीन घडे पर पडी हुई धूली का सम्बन्ध उस नवीन घडे के

---

જીવાણં પાણાઇવાએણં કિરિયા કજ્જઇ" હે ભગવન્ જીવોને પ્રાણાતિપાતથી અશુભ ક્રિયા ઉત્પન્ન થાય છે? અર્થાત્ જીવો પ્રાણાતિપાતથી અશુભ કર્મ બંધ કરે છે? પ્રાણાતિપાત-જીવોની વિરાધના કરવાથી કર્મનો બંધ થાય છે? આ પ્રશ્નના ઉત્તરમાં પ્રભુ કહે છે કે—"हंता अत्थि" હા ગૌતમ પ્રાણાતિપાતથી જીવોને કર્મનો બંધ અવશ્ય થાય છે. હવે ગૌતમ સ્વામી ફરીથી આ વિષયમાં પ્રભુને એવું પૂછે છે કે-"सा भंते! किं पुट्ठा कज्जइ अपुट्ठा कज्जइ" હે ભગવન્ પ્રાણાતિપાત દ્વારા જીવોને જે અશુભ કર્મનો બંધ થાય છે, તે અશુભ ક્રિયા તેમના આત્મ પ્રદેશોથી સંબદ્ધ થઈને જ બંધાય છે? કે અસંબદ્ધ થઈને બંધાય છે? આ પ્રશ્નના ઉત્તરમાં પ્રભુ કહે છે કે-"पुट्ठा कज्जइ नो अपुट्ठा कज्जइ" હે ગૌતમ જેટલી ક્રિયાઓ હોય છે તે બધી જ આત્મપ્રદેશોથી સંબદ્ધ થઈને જ થાય છે. આ રીતે પ્રાણાતિપાત દ્વારા થવાવાળા તે કર્મ બંધ રૂપ અશુભ ક્રિયા આત્મ-પ્રદેશની સાથે સંબદ્ધ થઈને જ બંધાય છે અસંબદ્ધ થઈને બંધાતી નથી. કહેવાનું તાત્પર્ય એ છે કે પ્રાણાતિપાત વિગેરે પાપસ્થાનોથી જે કર્મનો બંધ થાય છે તે ક્ષીર, નીરથી માફક આત્મપ્રદેશોની એક સાથે એક ક્ષેત્રાવગાહ રૂપથી થાય છે. પરંતુ જેવી રીતે નવા ઘડા ઉપર પડેલી ધૂળનો સંબંધ તે

साथ एक क्षेत्रावगाहरूप से नहीं होता है ऐसा यह बन्ध नहीं होता है। 'एवं जहा पढमसए छट्ठुद्देसए जाव णो अणाणुपुव्विकडा त्ति वत्तव्वं सिया' इस प्रकार से जैसा प्रथम शतक में छठे उद्देशे में 'अणाणुपुव्विकडात्ति वत्तव्वं सिया' इस पाठ तक जो विषय इस संबन्ध में कहा गया है वह सब यहां ग्रहण कर लेना चाहिये। वहां 'जाव निव्वाघाएणं' ऐसा पाठ है सो वहां आगत यावत् पद से यह विवक्षित पाठ यहां गृहीत हुआ है—'सा भंते किं ओगाढा कज्जइ अणोगाढा कज्जइ? गोयमा! ओगाढा कज्जइ णो अणोगाढा कज्जइ' यहां से लेकर 'नो अणाणुपुव्विकडा त्ति वत्तव्वं सिया' यहां तक का सब पाठ गृहीत हुआ है। इस पाठ की व्याख्या प्रथम शतक के छठे उद्देशे में आगत द्वितीय सूत्र के ऊपर की गई मेरी प्रमेयचन्द्रिका नाम की टीका में देखना चाहिये। 'एवं जाव वेमाणियाणं' सामान्य जीव के विषय में प्राणातिपात से क्रिया होती है ऐसा जैसा कहा गया है उसी प्रकार से वैमानिक पर्यन्त २४ दण्डकों में जीव के विषय में प्राणातिपात से क्रिया होती है ऐसा जानना चाहिये। 'नवरं जीवाणं एगिंदियाण य निव्वाघाएणं छद्दिसिं' समुच्च

---

નવા ઘડાની સાથે એક ક્ષેત્રાવગાહ રૂપથી હોતો નથી તેવીજ રીતે આત્મ-પ્રદેશોની સાથે આ બંધ પણ એકરૂપ હોતો નથી. "एवं जहा पढमसए छट्ठुद्देसए जाव णो अणाणुपुव्विकडात्ति वत्तव्वं सिया" આ રીતે પહેલા શતકના છઠ્ઠા ઉદ્દેશામાં "अणाणुपुव्विकडात्ति वत्तव्व सिया" આ પાઠ સુધી. જે પ્રમાણેનું કથન આ વિષયના સંબંધમાં કરવામાં આવ્યું છે. એ પ્રમાણેનું સઘળું કથન અહિં ગ્રહણ કરી લેવું. ત્યાં આગળ "जाव निव्वाघाएणं" એવો પાઠ છે. તેમાં આવેલ યાવત્ પદથી નીચે પ્રમાણેનો પાઠ અહિયાં ગ્રહણ થયો છે. "सा भंते! किं ओगाढा कज्जइ अणोगाढा कज्जइ गोयमा! ओगाढा कज्जइ, णो अणोगाढा कज्जइ" આ પાઠથી લઈને "णो अणाणुपुव्विकडात्ति वत्तव्वं सिया" અહિ સુધીનો સઘળો પાઠ ગ્રહણ કરી લેવો. આ પાઠની વ્યાખ્યા પહેલા શતકના છઠ્ઠા ઉદ્દેશામાં આવેલ બીજા સૂત્ર ઉપરની મેં કરેલ પ્રમેયચંદ્રિકા નામની ટીકામાં જોઈ લેવું. "एवं जाव वेमाणियाणं" સામાન્ય જીવના વિષયમાં પ્રાણાતિપાતથી કર્મ બંધ થાય છે. એવું જે કહેવામાં આવ્યું છે તેજ રીતે વૈમાનિક સુધીના ચોવીસે દંડકોમાંના જીવોના વિષયમાં પ્રાણાતિપાતથી કર્મનો બંધ થાય છે. એ પ્રમાણે સમજી લેવું. "नवरं जीवाणं एगिंदियाण य णिव्वाघाएणं छद्दिसिं"

य जीवों के तथा एकेन्द्रिय जीवों के प्राणातिपात द्वारा जो क्रिया होती है वह व्याघात के अभाव में नियम से छहों दिशाओं में ही होती है, 'वाघायं पडुच्च सिय तिदिसिं' और व्याघात होता है तो वह क्रिया तीन दिशाओं में भी होती है। 'सिय चउदिसिं' चार दिशाओं में भी होती है, 'सिय पंचदिसिं' पांच दिशाओं में भी होती है। तात्पर्य यह है कि यदि व्याघात न हो तो एकेन्द्रिय जीवों के प्राणातिपात क्रिया छहों दिशाओं में होती है, और यदि व्याघात है तो उस व्याघात संबन्धी स्थान को छोड़कर शेष तीन दिशाओं में, चार दिशाओं में और पांच दिशाओं में प्राणातिपात जन्य क्रिया हो सकती है। जब तीन दिशाओं में व्याघात होगा-तो तीन दिशाओं में प्राणातिपातजन्य क्रिया होगी, दो दिशाओं में व्याघात होगा तो चार दिशाओं में प्राणातिपात जन्य क्रिया होगी, और एक दिशा में व्याघात होगा तो पांच दिशाओं में प्राणातिपात जन्य क्रिया होगी। तीन दिशाओं से अधिक व्याघात नहीं होता है। तथा यदि किसी भी दिशा में व्याघात नहीं है तो नियम से छहों दिशाओं में प्राणातिपात क्रिया होगी विदिशाओं में व्याघातरूप अलोक है। तथा च दिक् कोण में अवस्थित जीव होगा उस समय उसके

---

સમુચ્ચય જીવોને પ્રાણાતિપાત દ્વારા જે ક્રિયા થાય તે વ્યાઘાતના અભાવમાં નિયમથી છએ દિશાઓમાં થાય છે "वाघायं पडुच्च सिय तिदिसिं" અને જો વ્યાઘાત થાય છે તો તે ક્રિયા ત્રણ દિશાઓથી પણ થાય છે. "सिय चउदिसिं" ચાર દિશાઓમાં પણ થાય છે. "सिय पंचदिसिं" પાંચ દિશાઓમાં પણ થાય છે. કહેવાનું તાત્પર્ય એ છે કે જો વ્યાઘાત ન હોય તો એકેન્દ્રિય જીવોને પ્રાણાતિપાતક્રિયા છએ દિશાઓમાં થાય છે. અને જો વ્યાઘાત થાય તો વ્યાઘાત સંબંધી સ્થાનને છોડીને બાકીની ત્રણ દિશાઓમાં ચાર દિશાઓમાં પાંચ દિશામાં પણ પ્રાણાતિપાતથી થવાવાળી ક્રિયા થઇ શકે છે. અને જ્યારે ત્રણ દિશાઓમાં વ્યાઘાત થાય તો ત્રણ દિશાઓમાં પ્રાણાતિપાતથી થવાવાળી ક્રિયા-કર્મનો બંધ થશે બે દિશાઓમાં વ્યાઘાત થાય તો ચાર દિશાઓમાં પ્રાણાતિપાતજન્ય ક્રિયા થશે. અને એક દિશામાં વ્યાઘાત થાય તો પાંચ દિશામાં પ્રાણાતિપાતથી થવાવાળી ક્રિયા થશે. તેમજ જો કોઈપણ દિશામાં વ્યાઘાત ન થાય તો નિયમથી છએ દિશાઓમાં પ્રાણાતિપાતથી થવાવાળી ક્રિયા થશે વિદિશામાં વ્યાઘાતરૂપ અલોક છે. અને દિક્કોણમાં જીવ અવસ્થિત હોય તે સમયે તેનું ત્રણ દિશામાં અલોકમાં વ્યાપ્ત

दिक्त्रय में अलोक के व्याप्त होने के कारण शेष दिक्त्रय में ही प्राणातिपातजन्य क्रिया होगी। तथा जहां दिग्द्वय में अलोक होगा वहां चार दिशाओं में क्रिया होगी, तथा-जहां एक ही दिशा में व्याघात होगा वहां शेष पांच दिशाओं में ही वह क्रिया होगी, तथा जब जीव मध्य में अवस्थित होगा तब प्रतिबन्धक अलोक के अभाव में उस जीव की छहों दिशा में वह क्रिया होगी। 'सेसाणं नियमा छद्दिसिं' 'समुच्चय जीव और एकेन्द्रिय जीवों के सिवाय अन्य जीवों की नियम से छहों दिशाओं में प्राणातिपात से क्रिया होती है।

अब गौतम प्रभु से ऐसा पूछते हैं-'अत्थि णं भंते! जीवाणं मुसावाएणं किरिया कज्जइ' हे भदन्त! मृषावाद से क्या जीव को क्रिया होती है? इसके उत्तर में प्रभु कहते हैं-हंता अत्थि' हां, गौतम! मृषावाद से भी जीवों को क्रिया होती है-कर्मबन्ध होता है। 'सा भंते! किं पुट्ठा कज्जइ, अपुट्ठा कज्जइ' हे भदन्त! वह क्रिया आत्मप्रदेशों से स्पृष्ट होती है या अस्पृष्ट होती है? इसके उत्तर में प्रभु कहते हैं। 'जहा पाणाइवाएणं दंडओ एवं मुसावाएण वि' हे गौतम! प्राणातिपात को आश्रित करके छठे उद्देशक का प्रकरण जैसा हमने तुम्हें स्मरण कराया है उसी प्रकार से मृषावाद को आश्रित करके भी वही सब प्रकरण यहां

---

હોવાને કારણે બાકીની ત્રણ દિશામાં જ પ્રાણાતિપાતથી થવાવાળી ક્રિયા થશે. અને જ્યાં બે દિશામાં અલોક હશે ત્યાં બાકીની પાંચ દિશાઓમાં જે તે ક્રિયા થશે. અને જ્યારે જીવ મધ્યમાં અવસ્થિત રહેશે ત્યારે પ્રતિબન્ધક અલોકના અભાવમાં તે જીવને છએ દિશાઓમાં તે ક્રિયા થશે "सेसाणं नियमा छद्दिसिं" સમુચ્ચય જીવ અને એકેન્દ્રિય જીવો શિવાયના બીજા જીવોને નિયમથી છએ દિશાઓમાં પ્રાણાતિપાતથી થવાવાળી ક્રિયા થાય છે. હવે ગૌતમ સ્વામી પ્રભુને એવું પૂછે છે કે-"अत्थि णं भंते! जीवाणं मुसावाएणं किरिया कज्जइ" હે ભગવન્ મૃષાવાદ-અસત્ય વચનથી જીવને ક્રિયા-કર્મનો બંધ થાય છે? તેના ઉત્તરમાં પ્રભુ કહે છે કે "हंता अत्थि" હા ગૌતમ! મૃષાવાદથી પણ જીવોને ક્રિયા થાય છે. અર્થાત્ કર્મબન્ધ થાય છે. "सा भंते! किं पुट्ठा कज्जइ, अपुट्ठा कज्जइ" હે ભગવન્ તે ક્રિયા આત્મપ્રદેશોથી સ્પૃષ્ટ થઈને થાય છે કે અસ્પૃષ્ટ થઈને થાય છે? તેના ઉત્તરમાં પ્રભુ કહે છે કે-"जहा पाणाइवाएणं दंडओ एवं मुसावाएण वि" હે ગૌતમ! પ્રાણાતિપાતનો આશ્રય કરીને પહેલા શતકના છટ્ઠા ઉદ્દેશાનું પ્રકરણ મેં જેમ કહ્યું છે, એજ રીતે મૃષાવાદનો આશ્રય

पर भी स्मरण कर लेना चाहिये। अर्थात् मृषावाद में भी प्राणातिपात सम्बन्धी सब कथन जानना चाहिये। अतः प्राणातिपात के स्थान पर मृषावाद शब्द लगाकर वह प्रकरण मृषावाद के साथ संगत कर लेना चाहिये। 'एवं अदिन्नादाणेण वि' इसी प्रकार से अदत्तादान के सम्बन्ध में भी दण्डक कह लेना चाहिये। तथा 'एवं मेहुणेण वि 'प्राणातिपात के दण्डक के जैसा मैथुन के सम्बन्ध में भी दण्डक कहा गया है ऐसा जानना चाहिये। 'परिग्गहेण वि' परिग्रह में भी ऐसा विचार कर लेना चाहिये। 'एवं एए पंच दंडगा' इस प्रकार से ये पांच दण्डक होते हैं। पांच पाप सम्बन्धी सो ये पांच दण्डक सामान्यरूप से कहे गये हैं।

अब सूत्रकार समय देश प्रदेश को लेकर पांच पांच दण्डक कहते है। इस पर गौतम ने प्रभु से ऐसा पूछा है-'जं समयं णं भंते! जीवाणं पाणाइवाएणं किरिया कज्जइ' यहां 'जं समयं' यह सप्तमी के अर्थ में द्वितीया विभक्ति हुई है-अतः जिस समय में हे भदन्त! जीवों को प्रागातिपात से क्रिया होती है। 'सा किं पुट्ठा कज्जइ, अपुट्ठा कज्जइ' वह क्रिया क्या उनके आत्मप्रदेशों के साथ स्पृष्ट होती है या अस्पृष्ट होती है? इसके उत्तर में प्रभु कहते हैं। 'एवं तहेव जाव वत्तव्वं सिया' हे गौतम!

---

करीने ते सघळुं प्रकरण अहियां पण याद करी समजी लेवुं. अर्थात् मृषावादमां पण प्राणातिपातना संबंधमां सघळुं कथन समजवुं. जेथी प्राणातिपातना स्थाने मृषावाद शब्दनो प्रयोग करीने ते प्रकरण मृषावादना संबंधमां लगावी लेवुं. 'एवं अदिन्नादाणेण वि" एज रीते अदत्तादानना विषयमां पण दंडक समजी लेवा. तेवी ज रीते "एवं मेहुणेणवि" प्राणातिपातना दंडकनी माफक ज मैथुनना संबंधमां पण दंडक कहेवामां आवेल छे, तेम समजवुं. "परिग्गहेणवि" परिग्रहना संबधमां पण एवो ज विचार समजवो जोईए "एवं एए पंच दंडगा" आ रीते सामान्य रूपथी आ पांच दंडक कहेवामां आव्या छे.

हवे सूत्रकार समय, देश अने प्रदेशने लइने पांच पांच दंडको कहे छे. आ विषयमां गौतम स्वामीए प्रभुने एवुं पूछयुं के—"जं समयं णं भंते! जीवाणं पाणाइवाएणं किरिया कज्जइ" अहियां "जं समयं" ए ठेकाणे सप्तमीना अर्थमां द्वितीया विभक्ति थई छे—जेथी जे समये जीवोने प्राणातिपातथी क्रिया थाय छे "सा किं पुट्ठा कज्जइ अपुट्ठा कज्जइ" ते क्रिया तेना आत्मप्रदेशोनी साथे स्पृष्ट थाय छे के अस्पृष्ट थाय छे? तेना उत्तरमां प्रभु कहे छे के—"एवं तहेव जाव वत्तव्वं सिया" हे गौतम!

'वत्तव्वं सिया' यहां तक जो विषय प्राणातिपात क्रिया की टीका में जैसा पहिले कहा गया है वही सब विषय कथन वहां तक का यहां पर भी ग्रहण कर लेना चाहिये अर्थात् प्राणातिपात क्रिया की टीका में जो विषय 'वत्तव्वं सिया' पद तक कथनीय कहा गया है वही सब विषय यहां पर भी कथनीय है ऐसा जानना चाहिये, और यह सब 'जाव वेमाणियाणं' एकेन्द्रिय जीव से लेकर वैमानिक पर्यन्त २४ दण्डकों में वैसा का वैसा ही समझना चाहिये। इस प्रकार सामान्य जीव प्रकरण में (यस्मिन् समये प्राणातिपातितक्रिया क्रियते सा स्पृष्टैव क्रियते, नो अस्पृष्टा) इत्यादि जैसा कहा है, वह सब वैमानिक पर्यन्त जीवप्रकरण में भी ग्रहण कर लेना चाहिये। 'एवं जाव परिग्गहेणं' इसी प्रकार से जीव जीस समय में यावत्पद गृहीत मृषावाद द्वारा अदत्तादान द्वारा, मैथुन द्वारा, और परिग्रह द्वारा क्रिया करता है उस समय में वह क्रिया आत्मप्रदेशों से स्पृष्ट हुई ही वह करता है अस्पृष्ट हुई वह नहीं करता है इत्यादि सब प्रकरणान्त तक का प्रभु द्वारा कहा गया उत्तर यहां जानना चाहिये। 'एवं एए वि पंच दंडगा' इस प्रकार से समय को

---

"वत्तव्वं सिया" અહિયાં સુધીમાં પ્રાણાતિપાત ક્રિયાના વિષયમાં પહેલાં ટીકામાં જે પ્રમાણે કહેવામાં આવ્યું છે, તેજ પ્રમાણે તે સઘળું કથન ત્યાં સુધીનું અહિયાં પણ સમજી લેવું જોઇએ અર્થાત્ પ્રાણાતિપાત ક્રિયાના કથનની ટીકામાં જે વિષય "वत्तव्वं सिया" એ પદ સુધી કહેવાનું કહ્યું છે. એ એજ સઘળો વિષય અહિયાં પણ કહી લેવો તેમ સમજવું. અને તે કથન "जाव वेमाणियाणं" એટલે કે એકેન્દ્રિય જીવથી લઇને વૈમાનિક સુધીના ચૌવીસ દંડકોમાં પણ તેવી જ રીતે સમજી લેવું આ રીતે સામાન્ય જીવના પ્રકરણમાં "यस्मिन् समये प्राणातिपातिकि क्रिया क्रियते सा स्पृष्टैव क्रियते, नो अस्पृष्टा" ઈત્યાદિ જેમ કહ્યું છે તે સઘળું વૈમાનિક સુધીના જીવ પ્રકરણમાં પણ ગ્રહણ કરી લેવું જોઇએ. "एवं जाव परिग्गहेणं" એજ રીતે જીવ જે સમયે મૃષાવાદ—અસત્ય ભાષણદ્વારા, અદત્તાદાન દ્વારા, મૈથુનથી અને પરિગ્રહથી ક્રિયા—કર્મબંધ કરે છે, તે સમયે તે ક્રિયા-કર્મબંધ આત્મપ્રદેશોને સ્પૃષ્ટ થઈને જ તે કરે છે, અસ્પૃષ્ટ થઈને તે કરતા નથી. વિગેરે પ્રકરણના અન્ત સુધી પ્રભુએ આપેલ સઘળો ઉત્તર અહિયાં સમજવો. "एवं एए वि पंच दंडगा" આ પ્રમાણે

लेकर प्राणातिपातादि द्वारा जायमान क्रिया के विषय में ये ५ दण्डक हो जाते हैं। इन से जायमान क्रिया का विस्तृत विचार पूर्वप्रदर्शित रीति के अनुसार अपने आप कर लेना चाहिये। देश को आश्रित करके गौतम प्रभु से ऐसा पूछते हैं-'जं देसेणं भंते! जीवाणं पाणाइवाएणं किरिया कज्जइ, 'हे भदन्त! जिस देश में-देश विभाग में जीव द्वारा प्राणातिपात आदिको लेकर जो क्रिया की जाती है वह क्रिया क्या उनके आत्मप्रदेशों से स्पृष्ट होती है? या अस्पृष्ट होती है? इत्यादि सब विचार जैसा समय को आश्रित कर किया गया है वैसा ही यहां पर कर लेना चाहिये, तथा इसी प्रकार का विचार प्रदेश को आश्रित कर जायमान प्राणातिपात आदि क्रियाओं के विषय में भी जानना चाहिये। आगे के सूत्रों का अर्थ मूलार्थ के जैसा ही है--अतः टीकार्थ नहीं लिखा है। इस प्रकार से प्राणातिपात, मृषावाद, अदत्तादान, मैथुन, परिग्रह ये पांच दंडक समुच्चय जीव से ५, समय को लेकर ५, देश को लेकर ५ और प्रदेश को लेकर ५ दण्डक प्राणातिपात आदि से जायमान क्रियाओं के २० दंडक होते हैं। सू० १॥

---

સમયથી લઇને તે પ્રાણાતિપાત વિગેરેથી થવાવાળી ક્રિયાના વિષયમાં આ પાંચ દંડકો થઇ જાય છે. આનાથી થવાવાળી ક્રિયાનો સવિસ્તર વિચાર પહેલા કહેલ રીત અનુસાર પોતે પોતાની મેળે કરી લેવો જોઇએ.

હવે દેશનો આશ્રય કરીને ગૌતમસ્વામી પ્રભુને એવું પૂછે છે કે—"जं देसे णं भंते! जीवाणं पाणाइवाएणं किरिया कज्जइ" હે ભગવન્ જે દેશમાં-દેશ વિભાગમાં જીવો દ્વારા પ્રાણાતિપાત વિગેરેને લઇને જે ક્રિયા કરવામાં આવે છે શું? તે ક્રિયા તેના આત્મપ્રદેશોને સ્પૃષ્ટ થઈને કરવામાં આવે છે શું? અથવા અસ્પૃષ્ટ થાય છે? વિગેરે સઘળો વિચાર સમયને લઈને જેવી રીતે કરવામાં આવ્યો છે, તેજ રીતે અહિયાં પણ વિચાર કરી લેવો. તેમજ આ રીતનો વિચાર પ્રદેશનો આશ્રય કરીને થવાવાળા પ્રાણાતિપાત વિગેરે ક્રિયાઓના વિષયમાં પણ સમજવો. આ પછીના સૂત્રોનો અર્થ મૂલાર્થ પ્રમાણે છે, જેથી ટીકાર્થમાં તે અર્થ આપવામાં આવ્યો નથી. આ રીતે પ્રાણાતિપાત, મૃષાવાદ અદત્તાદાન, મૈથુન, પરિગ્રહ આ પાંચ દંડક સમુચ્ચય-જીવથી ૫, સમયને લઈને ૫, દેશને લઇને ૫, અને પ્રદેશને લઈને પાંચ દંડક પ્રાણાતિપાત આદિથી થવાવાળી ક્રિયાઓના વીસ દંડકો થાય છે. ાસૂ ૧ા

पूर्वं क्रिया प्रोक्ता, सा च क्रिया कर्म, कर्मच दुःखकारणत्वात् दुःखमिति दुःखनिरूपणायाऽऽह-'जीवाणं भंते !' इत्यादि ।

**मूलम्-जीवाणं किं अत्तकडे दुक्खे परकडे दुक्खे तदुभयकडे दुःखे ? गोयमा ! अत्तकडे दुक्खे नो परकडे दुक्खे नो तदुभयकडे दुक्खे एवं जाव वेमाणियाणं। जीवा णं भंते! किं अत्तकडं दुक्खं वेदेंति परकडं दुक्खं वेदेंति तदुभयकडं दुक्खं वेदेंति? गोयमा? अत्तकडं दुक्खं वेदेंति नो परकडं दुक्खं वेदेंति नो तदुभयकडं दुक्खं वेदेंति एवं जाव वेमाणियाणं। जीवाणं भंते! अत्तकडा वेयणा परकडा वेयणा पुच्छा गोयमा! अत्तकडा वेयणा नो परकडा वेयणा नो तदुभयकडा वेयणा एवं जाव वेमाणियाणं। जीवा णं भंते! किं अत्तकडं वेयणं वेदेंति परकडं वेयणं वेदेंति तदुभयकडं वेयणं वेदेंति गोयमा! जीवा अत्तकडं वेयणं वेएंति नो परकडं नो तदुभयकडं एवं जाव वेमाणियाणं सेवं भंते! सेवं भंते! त्ति ॥सू० २॥**

छाया—जीवानां भदन्त ! किम् आत्मकृतं दुःखम् परकृतं दुःखं तदुभयकृतम् दुःखम् ? गौतम ! आत्मकृतं दुःखम् नो परकृतं दुःखं, नो तदुभयकृतं दुःखम् एवं यावद् वैमानिकानाम् । जीवाः खलु भदन्त ! किम् आत्मकृतं दुःखं वेदयन्ति परकृतं दुःखं वेदयन्ति तदुभयकृतं दुःखं वेदयन्ति ? गौतम ! आत्मकृतं दुःखं वेदयन्ति नो परकृतं दुःखं वेदयन्ति नो तदुभयकृतं दुःखं वेदयन्ति एवं यावद् वैमानिकानाम् । जीवानां भदन्त ! आत्मकृता वेदना परकृता वेदना पृच्छा गौतम ! आत्मकृता वेदना नो परकृता वेदना नो तदुभयकृता वेदना एवं यावद् वैमानिकानाम् । जीवाः खलु भदन्त ! किम् आत्मकृतां वेदनां वेदयन्ति परकृतां वेदनां वेदयन्ति तदुभयकृतां वेदनां वेदयन्ति ? गौतम जीवा आत्मकृतां वेदनां वेदयन्ति नो परकृताम् नो तदुभयकृताम् एवं यावद वैमानिकानाम् तदेवं भदन्त ! तदेवं भदन्त ! इति ॥सू० २॥

टीका--'जीवाणं भंते !' जीवानाम् भदन्त ! 'किं अत्तकडे दुक्खे' किम् आत्मकृतं दुःखम्-आत्मना-स्वेन कृतं-संपादितम् इति आत्मकृतम् दुःखम् अत्र दुःखशब्देन कर्मगृह्यते कार्ये कारणोपचारात् 'परकडे दुक्खे' परकृतम् परेण-आत्मभिन्नेन कृतं-संपादितं यत् तत् परकृतम् 'तदुभयकडे दुक्खे' 'तदुभयकृतं दुःखम् उभाभ्यां-स्वपराभ्यां कृतं संपादितं यत् दुःखम् तत् तदुभयकृतम् हे भदन्त ! जीवानाम् यद्दुःखं भवति तत् किं स्वसंपादितं परसंपादितं तदुभयसंपादितमिति प्रश्नः, भगवानाह-'गोयमा' इत्यादि । 'गोयमा !' हे गौतम ! 'अत्तकडे

---

पहिले क्रिया का कथन किया गया है-यह क्रिया कर्मरूप होती है और कर्म दुःख का कारण होने से दुःखरूप होता है। अतः दुःख का निरूपण करने के लिये सूत्रकार 'जीवाणं भंते ! किं अत्तकडे दुक्खे' इत्यादि सूत्र का कथन करते हैं—

'जीवाणं भंते ! किं अत्तकडे दुक्खे परकडे दुक्खे । इत्यादि ।

टीकार्थ—इस सूत्र द्वारा गौतम ने प्रभु से ऐसा पूछा है कि हे भदन्त ! जीवों का जो 'दुक्खे' दुःख है कार्य में कारण के उपचार से जो कर्म है-वह आत्मकृत अपने ही द्वारा संपादित-है अथवा-परकृत-आत्मभिन्न अन्य द्वारा संपादित है, या स्वपर-उभय-द्वारा संपादित है ? प्रश्न का तात्पर्य ऐसा है कि जीवों को जो दुःख होता है-वह क्या स्वसंपादित है ? या पर संपादित है ? या तदुभय संपादित है ? इसके उत्तर में प्रभु कहते हैं-'गोयमा ! 'हे गौतम ! 'अत्तकडे दुक्खे' वाक्य

---

પહેલાં ક્રિયાનું કથવ કરવામાં આવ્યું છે. આ ક્રિયા કર્મરૂપ હોય છે. અને કર્મ દુઃખનું કારણ હોવાથી દુઃખરૂપ હોય છે. જેથી દુઃખનું નિરૂપણ કરવા માટે સૂત્રકાર નીચે પ્રમાણે સૂત્ર કહે છે.

"जीवाणं भंते ! किं अत्तकडे दुक्खे" ઇત્યાદિ

ટીકાર્થ--આ સૂત્રદ્વારા ગૌતમ સ્વામીએ પ્રભુને એવું પૂછ્યું છે કે-હે ભગવન્ જીવોના જે "दुक्खे" દુઃખ છે, કાર્યમાં કારણના ઉપચારથી જે કર્મ છે તે આત્મકૃત પોતે પોતાની આપે જ સંપાદિત કર્યા છે ? કે પરકૃત -પોતાના શિવાય બીજાએ કરેલા છે ? અથવા સ્વ-પર-ઉભય-બન્નેએ સંપાદન કરેલા છે ? આ પ્રશ્નનું તાત્પર્ય એવું છે કે-જીવોને જે દુઃખ થાય છે, તે શું પોતે જ કરેલ છે ? અથવા પર-અન્ય દ્વારા સંપાદિત કરેલા છે ? અથવા સ્વ-પરઉભય દ્વારા સંપાદિત કરેલા છે ? તેના ઉત્તરમાં પ્રભુ કહે છે કે-"ગોયમા !

दुक्खे' आत्मकृतं दुःखम् सर्वं वाक्यम् सावधारणमिति नियमात् यत् दुःखं जीवानां भवति तत्सर्वमात्मकृतमेव भवति न कथं कथमपि परकृतम् आत्मकृतकर्मणैव दुःखं भवतीत्यर्थः एवकारव्यवच्छेद्यं स्वयमेव दर्शयति 'नो परकडे दुक्खे' नो परकृतं दुःखम् यदिदं दुःखं जीवानाम् भवति न तत् परकृतम् अन्यथा कृतहान्यकृताभ्यागमप्रसङ्गात्। 'नो तदुभयकडे दुक्खे' नो तदुभयकृतं दुःखम् स्वात्मपरात्मसंमिलितजनितमपि दुःखं न भवति। 'एवं जाव वेमाणियाणं' एवं यावद् वैमानिकानाम्-एवम् एवमेव यथा सामान्यजीवविषये कथितम् यत् जीवानां दुःखं भवति तत् आत्मकृतमेव-स्वकृतमेव न परकृतम् न तदुभयकृतं वा तथैव, नारका-

सावधारण होता है इस नियमानुसार जो दुःख जीवों को होता है वह सब आत्मकृत ही होता है किसी भी प्रकार वह परकृत नहीं होता है। क्योंकि अपने दुःख का कारण आत्मकृत कर्म ही होता है अतः जब जीवों का दुःख आत्मकृत कर्म द्वारा ही होता है-तो ऐसी स्थिति में वह न परकृत होता है और न तदुभयकृत होता है। इसी बात को सूत्रकारने 'नो परकडे दुक्खे, इस कथन द्वारा पुष्ट किया है। यदि ऐसा मानने में आवे कि जीवों को जो दुःख होता है वह परकृत होता है तो इसमें कृतहानि और अकृताभ्यागम का प्रसङ्ग प्राप्त होता है 'एवं जाव वेमाणियाणं' इसी प्रकार का कथन वैमानिक तक के जीवों के सम्बन्ध में भी जानना चाहिये। जैसा अभी २ कहा गया है कि जीवों को जो दुःख होता है वह

હે ગૌતમ! "अत्तकडे दुक्खे" જીવોને જે દુઃખ થાય છે, તે બધા આત્મકૃત-પોતે જ કરેલા હોય છે, કોઈ પણ રીતથી તે પરકૃત-અન્ય દ્વારા કરેલા હોતા નથી. કેમ કે-પોતાના દુઃખનું કારણ પોતે કરેલા કર્મ જ હોય છે. જેથી જીવોના દુ:ખો પોતે કરેલા કર્મોદ્વારા જ થાય છે-એ પરિસ્થિતિમાં તે પરકૃત હોતા નથી તેમ જ તદુભયકૃત પણ હોતા નથી. આજ વાતને સૂત્રકારે "नो परकडे दुक्खे" नो तदुभयकडे दुक्खे" આ સૂત્રાંશ દ્વારા પુષ્ટ કરેલ છે. જો એમ માનવામાં આવે કે જીવોને જે દુઃખ થાય છે. તે પરકૃત જ હોય છે તો તેમાં કૃતહાનિ અને અકૃતાભ્યાગમનો પ્રસંગ ઉપસ્થિત થશે. (કરેલાને હાની પહોંચાડવી એટલે કે ન કર્યું તેમ કહેવું અને ન કર્યું હોય તેને અકૃતને સમર્થન કરવું તેનું નામ કૃતહાનિ-અકૃતાભ્યાગમ છે) "एवं जाव वेमाणियाणं" એજ રીતનું કથન વૈમાનિક સુધીના જીવોના વિષયમાં પણ સમજી લેવું. ચાલુ પ્રકરણમાં જેમ કહેવામાં આવ્યું છે કે-જીવોને જે દુઃખ થાય છે, તે આત્મકર્મ પોતે કરેલા કર્મકૃત જ હોય છે

द्वारभ्य यावद् वैमानिकानामपि दुःखं यद्भवति तद् स्वकृतमेव न तु परकृतं न तदुभयकृतं वेति। 'जीवा णं भंते!' जीवाः खलु भदन्त। 'किं अत्तकडं दुक्खं वेदेंति' किम् आत्मकृतं दुःखं वेदयन्ति अत्र दुःखपदम् दुःखस्य अथवा दुःखजनककर्मणो वाचकम् वेदनापदं सुखदुःखयोः अथवा सुखदुःखजनककर्मणोवाचकमिति। 'परकडं दुक्खं वेदेंति' परकृतं दुःखं वेदयन्ति 'तदुभयकडं दुक्खं वेदेंति' तदुभयकृतं दुःखं वेदयन्ति? हे भदन्त! स्वकृतदुःखस्य वेदनं भवति जीवानाम् परकृतस्य तदुभयकृतस्य वेतिप्रश्नः। भगवानाह-'गोयमा' इत्यादि। 'गोयमा' हे गौतम! 'अत्तकडं दुक्खं वेएंति' आत्मकृतम् दुःखं वेदयन्ति 'नो परकडं दुक्खं वेएँति' नो

आत्मकृत ही होता है सो इसी प्रकार का कथन नारक से लेकर वैमानिक देवों तक के दुःखों के विषय में भी जान लेना चाहिये-वह भी आत्मकृत ही होता है।

अब गौतम प्रभु से ऐसा पूछते हैं। 'जीवा णं भंते! किं अत्तकडं दुःखं वेदेंति, परकडं दुक्खं वेदेंति, तदुभयकडं दुक्खं वेदेंति' हे भदन्त! जीवों को जो दुःखों का वेदन होता है वह आत्मकृत दुःख का वेदन होता है? या परकृत दुख का वेदन होता है? या तदुभयकृत दुःख का वेदन होता है? यहां दुःखपद दुःख का अथवा दुःखजनक कर्म का वाचक है, एवं वेदना पद सुख दुःख का अथवा सुख दुःख जनक कर्म का वाचक है। इसके उत्तर में प्रभु कहते है-'गोयमा अत्तकडं दुक्खं वेएंति' जीव आत्मकृत दुःख का वेदन करते हैं, 'नो परकडं दुक्खं वेएँति' परकृत दुःख का वेदन नहीं करते हैं, और 'नो तदुभ-

આવી જ રીતનું કથન નારક જીવોથી લઈને વૈમાનિક દેવો સુધીના દુઃખોના વિષયમાં પણ સમજી લેવું તેઓમાં પણ આત્મકર્મકૃત જ હોય છે.

હવે ગૌતમ સ્વામી દુઃખના વેદનના વિષયમાં પ્રભુને એવું પૂછે છે કે- जीवा णं भंते! किं अत्तकडं दुक्खं वेदेंति परकडं दुक्खं वेदेंति, तदुभयकडं दुक्खं वेदेंति" હે ભગવન્ જીવોને જે દુઃખનું વેદન થાય છે, હે આત્મકૃત-પોતે કરેલા દુઃખનું વેદન થાય છે? કે પરકૃત-બીજાએ કરેલા દુ.ખનું વેદન થાય છે? અથવા તદુભયકૃત-આત્મ અને પર એ બન્નેએ કરેલા દુઃખનું વેદન થાય છે? અહિયાં દુઃખ પદ દુઃખનું અગર દુઃખજનક કર્મનું વાચક છે. તેમજ વેદના પદ સુખદુઃખનું અથવા સુખદુઃખજનક કર્મનું વાચક છે. આ પ્રશ્નના ઉત્તરમાં પ્રભુ કહે છે કે—"ગોયમા! अत्तकडं दुक्खं वेएंति" જીવ

परकृतं दुःखं वेदयन्ति 'नो तदुभयकडं दुक्खं वेएंति' नो तदुभयकृतं दुःखं वेदयन्ति, 'एवं जाव वेमाणियाणं' एवं यावद् वैमानिकानाम् यथा सामान्यजीवाः आत्मकृतमेव दुःखं वेदयन्ति न तु परकृतं दुःखं वेदयन्ति न वा तदुभयकृतं दुःखं वेदयन्ति तथैव नारकादाराभ्य यावद् वैमानिकाः अपि आत्मकृतमेव दुःखं वेदयन्ति नो परकृतं दुःखं वेदयन्ति नो वा तदुभयकृतं दुःखं वेदयन्ति। 'जीवाणं भंते !' जीवानां भदन्त ! 'अत्तकडा वेयणा' आत्मकृता वेदना भवति किम् अत्र वेदनाशब्दः सुखदुःखोभयपरकः अथवा सुखदुःखोभयजनककर्मपरकः अतः पूर्वापेक्षया वैलक्षण्यं भवतीति, 'परकडा वेयणा' परकृता वेदना 'पुच्छा' पृच्छा

---

यकडं दुक्खं वेएंति' न तदुभयकृत दुःख का वेदन करते हैं। 'एवं जाव वेमाणियाणं' जिस प्रकार से जीव आत्मकृत ही दुःख का वेदन करते हैं उसी प्रकार से नारक से लेकर वैमानिक तक के जीव भी आत्मकृत ही दुःख का वेदन करते हैं परकृत या उभयकृत दुःखका वेदन नहीं करते हैं।

अब गौतम प्रभु से ऐसा पूछते हैं–'जीवाणं भंते ! किं अत्तकडा वेयणा' हे भदन्त ! जीवों को क्या आत्मकृत वेदना होती है ? यहां वेदना शब्द सुखदुःख दोनों का कहनेवाला है अथवा सुख दुःख इन दोनों का जनक जो कर्म है उसका कहनेवाला है। इससे पूर्व की अपेक्षा से इसमें अन्तर आ जाता है। 'परकडा वेयणा पुच्छा०' या परकृत वेदना होती हैं या तदुभयकृत वेदना होती है ? उत्तर में प्रभु

---

આત્મકૃત દુઃખનું વેદન કરે છે, "नो परकडं दुक्खं वेएंति" પરકૃત દુઃખનું વેદન કરતા નથી. અને 'नो तदुभयकडं दुक्खं वेएंति' તદુભયકૃત દુઃખનું વેદન પણ કરતા નથી. "एवं जाव वेमाणियाणं" જે રીતે જીવ આત્મકૃત દુઃખનું જ વેદન કરે છે, એજ રીતે નારક જીવથી લઈને વૈમાનિક સુધીના જીવો પણ આત્મકૃત દુઃખનું જ વેદન કરે છે. પરકૃત અથવા તદુભયકૃત દુઃખનું વેદન કરતા નથી.

હવે ગૌતમ સ્વામી પ્રભુને એવું પૂછે છે કે–"जीवाणं भंते ! अत्तकडा वेयणा" હે ભગવન્ જીવોને આત્મકૃત વેદના થાય છે? અહિં વેદના શબ્દ સુખ અને દુઃખ એ બન્નેનો વાચક છે. અર્થાત્ સુખ દુઃખ એ બન્નેનું જનક જે કર્મ છે તેનો વાચક છે. આ રીતે પૂર્વની અપેક્ષાએ આમાં અંતર આવી જાય છે.–પરકૃત વેદના થાય છે ? કે સ્વ–પર તદુભયકૃત વેદના થાય છે? તેના ઉત્તરમાં પ્રભુ કહે છે કે–"गोयमा" હે ગૌતમ ! "अत्तकडा वेयणा" જીવોને જે વેદનાનો અનુભવ થાય છે તે આત્મકૃત વેદના જ હોય છે,

'किं वा तदुभयकडा वेयणा' तदुभयकृता वेदनेति प्रश्नः, भगवानाह-'गोयमा' इत्यादि। 'गोयमा' हे गौतम! 'अत्तकडा वेयणा' आत्मकृता वेदना 'एवं जाव वेमाणियाणं' एवं यावद् वैमानिकानाम्। 'जीवा णं भंते!' जीवाः खलु भदन्त! 'किं अत्तकडं वेयणं वेएंति' किम् आत्मकृताम् वेदनां वेदयन्ति अनुभवन्ति 'परकडं वेयणं वेएंति' परकृतां वेदनां वेदयन्ति, 'तदुभयकडं वेयणं वेएंति' तदुभयकृतां वेदनां वेदयन्ति? भगवानाह-'गोयमा' इत्यादि। 'गोयमा' हे गौतम! 'जीवा अत्तकडं वेयणं वेएंति' जीवा आत्मकृतां वेदनां वेदयन्ति 'नो परकडं वेयणं वेएंति' नो परकृतां वेदनां वेदयन्ति 'नो तदुभयकडं वेयणं वेएंति'

कहते हैं 'गोयमा' हे गौतम! 'अत्तकडा वेयणा नो परकडा वेयणा नो तदुभयकडा वेयणा' 'जीवों को आत्मकृत वेदना होती है। परन्तु परकृत और उभयकृत वेदना नहीं होती है। 'एवं जाव वेमाणियाणं' इसी प्रकार का कथन नारक से लेकर वैमानिक तक के जीवों के सम्बन्ध में भी समझ लेना चाहिये।

अब गौतम प्रभु से ऐसा पूछते हैं कि-'जीवा णं भंते! किं अत्तकडं वेयणं वेएंति' हे भदन्त! जीव क्या आत्मकृत वेदना का अनुभव करते हैं या 'परकडं वेयणं वेएंति तदुभयकडं वेयणं वेएंति' अथवा परकृत वेदना का अनुभव करते हैं? या तदुभयकृत वेदना का अनुभव करते हैं? इसके उत्तर में प्रभु कहते हैं-'गोयमा! इत्यादि हे गौतम! जीव आत्मकृत वेदना का अनुभव करते हैं, परकृत वेदना का या तदुभयकृत वेदना का अनुभव नहीं करते हैं। 'एवं जाव वेमाणियाणं' इसी प्रकार का कथन यावत् वैमानिक तक के जीवों के सम्बन्ध में भी जानना चाहिये। अर्थात् नारक से लेकर वैमानिक तक के जीव सब

'णो परकडा वेयणा णो तदुभयकडा वेयणा' પરકૃત અને તદુભય વેદના હોતી નથી. "एवं जाव वेमाणियाणं" આજ પ્રમાણેનું કથન નારકોથી લઈને વૈમાનિક સુધીના જીવોના સંબંધમાં પણ સમજી લેવું. ફરીથી ગૌતમ સ્વામી પ્રભુને એવું પૂછે છે કે-"जीवा अत्तकडं वेयणं वेएंति" હે ભગવન્ જીવો શું આત્મકૃત વેદનાનો અનુભવ કરે છે? અથવા પરકૃત વેદનાનો અનુભવ કરે છે? અથવા તદુભયકૃત વેદનાનો અનુભવ કરે છે? આના ઉતરમાં પ્રભુ કહે છે કે-"गोयमा" ઈત્યાદિ હે ગૌતમ! જીવ આત્મકૃત વેદનાનો અનુભવ કરે છે, પરકૃત અથવા તદુભયકૃત વેદનાનો અનુભવ કરતા નથી. "एवं जाव वेमाणियाणं" આ પ્રમાણેનું કથન યાવત્ વૈમાનિક સુધીના જીવોના સંબંધમાં પણ સમજી લેવું. અર્થાત્ નારકથી

नो तदुभयकृतां वेदनां वेदयन्ति । 'एवं जाव वेमाणियाणं' एवं यावद् वैमानिकानाम् । 'सेवं भंते ! सेवं भंते ! त्ति' तदेवं भदन्त ! तदेवं भदन्त ! इति ॥सू. २॥

॥ इति श्री विश्वविख्यात–जगद्वल्लभ–प्रसिद्धवाचक–पञ्चदशभाषा-
कलितललितकलापालापकप्रविशुद्धगद्यपद्यनैकग्रन्थनिर्मापक,
वादिमानमर्दक–श्रीशाहूच्छत्रपति कोल्हापुरराजप्रदत्त–
'जैनाचार्य' पदभूषित—कोल्हापुरराजगुरु–
बालब्रह्मचारि—जैनाचार्य—जैनधर्मदिवाकर
–पूज्य श्री घासीलालव्रतिविरचितायां
श्री "भगवतीसूत्रस्य" प्रमेयचन्द्रिका-
ख्यायां व्याख्यायां सप्तदशशतके
चतुर्थोद्देशकः समाप्तः ॥१७–४॥

---

आत्मकृत वेदना का ही अनुभव करते हैं इत्यादि। सेवं भंते सेवं भंते! त्ति' हे भदन्त! आपका कहा हुआ यह विषय सर्वथा सत्य हैं २। इस प्रकार कहकर वे गौतम यावत् अपने स्थान पर विराजमान हो गये।सू०२।

जैनाचार्य जैनधर्मदिवाकर पूज्यश्री घासीलालजी महाराजकृत
"भगवतीसूत्र" की प्रमेयचन्द्रिका व्याख्याके सत्तरहवें शतकका
चौथा उद्देशक समाप्त ॥१७–४॥

---

લઈને વૈમાનિક સુધીના સઘળા જીવો આત્મકૃત વેદનાનો જ અનુભવ કરે છે. પરકૃત અથવા તદુભયકૃત વેદનાનો અનુભવ કરતા નથી. "सेवं भंते! सेवं भंते! त्ति" હે ભગવન્ આપ દેવાનુપ્રિયે કહેલ આ તમામ વિષય સર્વથા સત્ય છે આપે કહેલ સઘળું કથન યથાર્થ છે. આ પ્રમાણે કહીને તે ગૌતમ સ્વામી યાવત્ પોતાના સ્થાન પર બિરાજમાન થઇ ગયા. ॥ સૂ ૨ ॥

જૈનાચાર્ય જૈનધર્મ દિવાકર પૂજ્યશ્રી ઘાસીલાલજી મહારાજ કૃત "ભગવતીસૂત્ર"ની પ્રમેયચન્દ્રિકા વ્યાખ્યાના સત્તરમા શતકનો ચોથો ઉદ્દેશો સમાપ્ત ॥૧૭–૪॥



अथ पञ्चमोद्देशकः प्रारभ्यते—

चतुर्थोद्देशकस्य अन्तिमभागे वैमानिकानां वक्तव्यता कथिता अथ पञ्चमोद्देशके ईशानेन्द्रस्य वक्तव्यता कथ्यते, इत्येवं सम्बन्धेन आयातस्य पञ्चमोद्देशकस्य इदमादिमं सूत्रम्—'कहि णं भंते !' इत्यादि ।

मूलम्—कहि णं भंते! ईसाणस्स देविंदस्स देवरन्नो सभा सुहम्मा पण्णत्ता, गोयमा! जंबुद्दीवे दीवे मंदरस्स पव्वयस्स उत्तरेणं इमीसे रयणप्पभाए पुढवीए बहुसमरमणिज्जाओ भूमिभागाओ उड्ढं चंदिमसूरिय० जहा ठाणपदे जाव मज्झे इत्थ ईसाणवडेंसए। से णं ईसाणवडेंसए महाविमाणे अद्धते-रसजोयणसहस्साइं एवं जहा दसमसए सक्कविमाणवत्तव्वया सा इहवि ईसाणस्स निरवसेसा भाणियव्वा जाव आयरक्खत्ति। ठिती सातिरेगाइं दो सागरोवमाइं सेसं तं चेव जाव ईसाणे देविंदे देवराया२। सेवं भंते! सेवं भंते! इति ॥सू० १॥

सत्तदससए पंचमो उद्देसो समत्तो।

छाया—कुत्र खलु भदन्त ! ईशानस्य देवेन्द्रस्य देवराजस्य सभा सुधर्मा प्रज्ञप्ता । गौतम ! जम्बूद्वीपे द्वीपे मन्दरस्य पर्वतस्योत्तरे अस्याः रत्नप्रभायाः पृथिव्याः बहुसमरमणीयात् भूमिभागात् ऊर्ध्वं चन्द्रसूर्य० यथा स्थानपदे यावत् मध्येऽत्र ईशानावतंसकः तत् खलु ईशानावतंसकं महाविमानम् अर्द्धत्रयोदश-योजनसहस्राणि एवं यथा दशमशतके शक्रविमानवक्तव्यता सा इहापि ईशानस्य निरवशेषा भणितव्या, यावदात्मरक्षक इति स्थितिः सातिरेकद्विसागरोपमे शेषं तदेव यावद् ईशानो देवेन्द्रो देवराजः २ । तदेवं भदन्त ! तदेवं भदन्त ! इति ॥सू० १॥

सत्तदससए पंचमो उद्देसो समत्तो ।

टीका—'कहि णं भंते !' कुत्र खलु भदन्त ! 'ईसाणस्स देविंदस्स देवरन्नो सभा सुहम्मा पन्नत्ता' ईशानस्य देवेन्द्रस्य देवराजस्य सभा सुधर्मा—सुधर्मानाम्नी

अंतं करेइ' एवं वनस्पतिकायिकोऽपि यावदन्तं करोति उभयत्रापि यावत्पदं माकन्दिकपुत्र वाक्यस्थावशिष्टवाक्यानां संग्राहकम् 'से कहमेयं भंते! एवं' तत् कथमेतद् भदन्त! एवम् श्रमणाः पृच्छन्ति हे भदन्त! माकन्दिकपुत्रेण अस्मभ्यं यत् कथितं कापोतिकलेश्यपृथिव्यादिकायिकजीवविषये तदेतत् कथनं किं सत्यमिति भावः, भगवानाह–'अज्जो! त्ति' इत्यादि, 'अज्जोत्ति' हे आर्या! इति 'समणे भगवं महावीरे' श्रमणो भगवान् महावीरः 'ते समणे णिग्गंथे आमंतित्ता' तान् श्रमणान् निर्ग्रन्थान् आमन्त्र्य–सम्बोध्य, हे आर्याः। इत्येवं रूपेण भगवान् तान् श्रमणान् स्वाभिमुखं कारयित्वेत्यर्थः 'एवं वयासी' एवं–वक्ष्यमाणप्रकारेण माकन्दिकपुत्रद्वारा कथितं स्ववाक्यमनुमोदयन्–परितोषयन् अवादीत् उक्तवान् 'जण्णं अज्जो' यत् खलु आर्याः! 'मागंदियपुत्ते अणगारे' माकन्दिकपुत्रोऽनगारः 'तुब्भे एवमाइक्खइ' युष्मान् एवमाख्याति, 'जाव परूवेइ' यावत्प्ररूप-

---

उक्त वाक्य से अवशिष्ट वाक्य का संग्रह किया है। इस प्रकार वे श्रमण निर्ग्रन्थ प्रभु के समक्ष माकन्दिक पुत्र अनगार के कथन को प्रकट करके अब यह पूछ रहे हैं–'से कहमेयं भंते! एवं' हे भदन्त! माकन्दिक पुत्र अनगारने जो कापोतलेश्यावाले एकेन्द्रिय पृथिवीकायिक, अप्कायिक और वनस्पतिकायिक जीव के विषयमें अपना अभिप्राय प्रकट किया–है–सो क्या वह ऐसा ही है–अर्थात् सत्य ही है? इसके उत्तर में प्रभु कहते हैं–'अज्जोत्ति समणे भगवं महावीरे ते समणे निग्गंथे आमंतित्ता एवं वयासी' हे आर्यो ऐसा श्रमण भगवान् महावीरने संबोधन करके इस प्रकार कहा 'जण्णं अज्जो मागंदियपुत्ते अणगारे तुब्भे एवमाइक्खइ' जो माकन्दिक पुत्र अनगारने आप लोगों से ऐसा कहा है 'जाव परूपवेइ' यावत्प्ररूपित किया है–यहां यावत् शब्द

---

યાવત્પદથી માકંદીપુત્ર અનગારના બાકીના વાકયોનો સંગ્રહ થયો છે. આ પ્રમાણે તે શ્રમણ નિર્ગ્રંથોએ પ્રભુ પાસે માકંદીપુત્ર અનગારના કથનને પ્રકટ કરીને તેઓને આ પ્રમાણે પૂછયું "से कहमेयं भंते! एवं" હે ભગવન્ કાપોતલેશ્યાવાળા એકેન્દ્રિય પૃથ્વીકાયિક અપ્કાયિક અને વનસ્પતિકાયિકજીવના વિષયમાં માકંદીપુત્ર અનગારે જે પોતાનો અભિપ્રાય બતાવ્યો છે, તો શું તે એ પ્રમાણે જ છે? અર્થાત્ સત્ય છે? તેના ઉત્તરમાં પ્રભુ કહે છે કે– "अज्जोत्ति समणे भगवं महावीरे ते समणे णिग्गंथे आमंतित्ता एवं वयासी" હે આર્યો! એ પ્રમાણેનું સંબોધન કરીને શ્રમણ ભગવાન્ મહાવીર સ્વામીએ આ પ્રમાણે કહ્યું. "जण्णं अज्जो मागंदियपुत्ते अणगारे तुब्भे एवमाइक्खइ' માકંદીપુત્ર અનગારે તમોને જે એવું કહ્યું છે, "जाव परूवेइ" યાવત્પ્રરૂપિત કર્યું

यति, यावत्पदेन भाषते, प्रज्ञापयतीत्यनयोः ग्रहणं कर्तव्यम्, 'एवं खलु अज्जो' एवं खलु आर्याः! 'काउलेस्से पुढवीकाइए जाव अंतं करेइ' एवं खलु कापोतिकलेश्यः पृथिवीकायिको यावदन्तं करोति, अत्र यावत्पदेन माकन्दिकपुत्रप्रश्नवाक्यमध्याद् अवशिष्टस्य सर्वस्यापि वाक्यस्य संग्रहो भवतीति बोध्यम्। 'एवं खलु अज्जो!' एवं खलु आर्याः! 'काउलेस्से आउकाइए जाव अंतं करेइ' कापोतिकलेश्योऽप्कायिको यावदन्तं करोति, 'एवं खलु अज्जो!' एवं खलु आर्याः! 'काउलेस्से वणस्सइकाइए वि जाव अंतं करेइ' कापोतिकलेश्यो वनस्पतिकायिकोऽपि यावदन्तं करोति, सर्वत्रापि यावत्पदेन 'काउलेस्से-

से 'भाषते प्रज्ञापयति' इन क्रियापदों का ग्रहण हुआ है। कि 'काउलेस्से पुढवीकाइए जाव अंतं करेइ' कापोतलेश्यावाला पृथिवीकायिक जीव यावत् समस्त दुःखो का अन्त कर देता है-यहां यावत् शब्द से माकन्दिक पुत्र अनगारके अवशिष्ट प्रश्नवाक्य का संग्रह हुआ है। 'एवं खलु अज्जो! काउलेस्से आउकाइए जाव अंतं करेइ' इसी प्रकार से हे आर्यो! जो माकन्दिकपुत्र अनगारने ऐसा कहा है कि कापोतलेश्यावाला अप्कायिक जीव यावत् अन्त कर देता है। यहां पर भी यावत् शब्द से 'काउलेस्सेहिंतो' पद से लेकर 'पच्छा सिज्झइ' इस पद तक के पाठ का ग्रहण हुआ है। इसी प्रकार से माकन्दिक पुत्र अनगार ने जो ऐसा कहा है कि-'एवं खलु अज्जो! काउलेस्से वणस्सइकाइए' हे आर्यो! कापोतलेश्यावाला वनस्पतिकायिक जीव 'वि' भी जाव अंतं करेइ' यावत् अन्त कर देता है-यहां पर भी

છે કે-અહિં યાવત્ શબ્દથી "भाषते प्रज्ञापयति" આ ક્રિયાપદોનો સંગ્રહ થયો છે. "काउलेस्से पुढवीकाइए जाव अंतं करेइ" કાપોતલેશ્યાવાળા પૃથ્વિકાયિક જીવ યાવત્સમસ્ત દુઃખોનો અંત કરે છે. અહિયાં યાવત્ શબ્દથી માકંદિ પુત્ર અનગારના બાકીના પ્રશ્નવાકયનો સંગ્રહ થયો છે "एवं खलु अज्जो काउलेस्से आउकाइए जाव अंतं करेइ" એજ પ્રમાણે હે આર્યો માકંદિપુત્ર અનગારે જે એમ કહ્યું છે કે કાપોતલેશ્યાવાળો અપ્કાયિક જીવ યાવત્ અંત કરે છે. અહિયાં પણ યાવત્ શબ્દથી "काउलेस्सेहिंतो" એ પદથી લઇને "पच्छा सिज्झइ" એ પદ સુધીના પાઠનો સંગ્રહ થયો છે. એજ રીતે માકંદીપુત્ર અનગારે જે એમ કહ્યું છે કે 'एवं खलु अज्जो काउलेस्से वणस्सइ काइए" હે આર્યો કાપોતલેશ્યાવાળા વનસ્પતિ જીવ પણ "जाव अंतं करेइ" યાવત્ અંત કરે છે. અહિં પણ યાવત્ શબ્દથી 'काउलेस्सेहिंतो" એ પદથી

हिंतो' इत्यारभ्य 'पच्छा सिज्झइ' इत्यन्तस्य ग्रहणं भवति, सच्चे णं एसमट्ठे', सत्यः खलु एषोऽर्थः-माकन्दिकपुत्रेण योऽर्थः कथितः सर्वथाऽपि सत्य एव। 'अहं पि णं अज्जो! अहमपि खलु आर्याः। 'एवमाइक्खामि' एवमाख्यामि-भाषे-प्रज्ञापयामि-प्ररूपयामि, 'एवं खलु अज्जो!' एवं खलु आर्याः! कण्हलेस्से पुढवीकाइए कण्हलेस्सेहिंतो पुढवीकाइएहिंतो जाव अंतं करेइ' कृष्णलेश्यः पृथिवीकायिको जीवः कृष्णलेश्येभ्यः पृथिवीकायिकेभ्योऽनन्तरमुद्वृत्य मानुष्यविग्रहं लभते, लब्ध्वा शुद्धसम्यक्त्वं प्राप्नोति, प्राप्य तत्पश्चात् सिद्ध्यति यावत्सर्वदुःखानामन्तं करोति, 'एवं खलु अज्जो'

---

यावत् शब्द से 'काउलेस्सेहिंतो' पद से लेकर 'पच्छासिज्झइ' इस पद तक के पाठ का संग्रह हुआ है। सो 'सच्चे णं एसमट्ठे' हे आर्यो! यह अर्थ उन्होंने सत्य कहा है। अहं पि णं अज्जो! एवमाइक्खामि' हे आर्यो! मैं भी ऐसा ही कहता हूं, भाषण करता हूं, प्रज्ञापित करता हूं, कि 'कण्हलेस्से पुढवीकाइए कण्हलेस्सेहिंतो पुढवीकाइएहिंतो जाव अंतं करेइ' कृष्णलेश्यावाला पृथिवीकायिकजीव कृष्णलेश्यावाले पृथिवीकायिकजीवों में मरकर यावत् समस्त दुःखों का अन्त कर देता है? यहां यावत् शब्द से इस सम्बन्ध का पूर्वोक्त सब पाठ गृहीत हुआ है-तथाच कृष्णलेश्यावाला पृथिवीकायिकजीव कृष्णलेश्यावाले पृथिवीकायिक जीवों में से मरकर तुरत मनुष्यपर्याय पाकर और उसमें शुद्ध सम्यक्त्व का लाभ कर बाद में सिद्ध पद पा लेता है यावत् सर्व दुःखों का अन्त कर देता है। 'एवं

---

લઈને "પચ્છા સિજ્જઇ" પછીથી સિદ્ધ થશે એ પદ સુધીના પાઠનો સંગ્રહ થયો છે. સચ્ચે ણં એસમટ્ઠે" હે આર્યો તેઓએ કહેલ આ કથન સત્ય છે "અહં વિ ણં અજ્જો એવ માઇક્ખામિ" હે આર્યો હું પણ એ પ્રમાણે જ કહું છું. અને એજ પ્રમાણે ભાષા દ્વારા વર્ણવું છું. અને એ પ્રમાણે પ્રજ્ઞાપિત કરૂં છું. કે "કણ્ણલેસ્સે પુઢવીકાઇએ કન્નલેસ્સેહિંતો પુઢવિકાઇએહિંતો જાવ અંતં કરેઇ" કૃષ્ણલેશ્યાવાળા પૃથ્વીકાયિક જીવ કૃષ્ણ લેશ્યાવાળા પૃથ્વી કાયિક જીવપણામાં મરીને યાવત્ સમસ્ત દુઃખોનો અંત કરે છે. અહિં યાવત્ શબ્દથી આ સંબંધને અનુસરતા બધા પાઠનો સંગ્રહ થયો છે. તેનો અર્થ આ પ્રમાણે છે. કૃષ્ણલેશ્યાવાળો પૃથ્વીકાયિક જીવ કૃષ્ણલેશ્યાવાળા પૃથ્વીકાયિક જીવપણાથી મરીને તરત મનુષ્ય પર્યાય પામીને તેમાં શુદ્ધ સમ્યક્જ્ઞાન મેળવીને સિદ્ધ પદ પામે છે યાવત્ સર્વ દુઃખોનો અંત કરે છે.—

एवं खलु आर्याः ! 'नीललेस्से पुढवीकाइए जाव अंतं करेइ' नीललेश्यः पृथिवीकायिको यावद् अन्तं करोति, 'एवं काउलेस्सो वि' एवं कापोतिकलेश्योऽपि 'जहा पुढवीकाइए एवं आउकाइए वि' यथा पृथिवीकायिक एवमप्कायिकोऽपि 'एवं वणस्सइकाइए वि' एवं वनस्पतिकायिकोऽपि-कृष्णनीलकापोतिकलेश्य पृथिवीकायिकाप्कायिकवनस्पतिकायिकोऽपि बोद्धव्य इति भावः। 'सच्चे णं एसमट्ठे' सत्यः खलु एषोऽर्थः, 'सेवं भंते ! सेवं भंते ! त्ति' तदेवं भदन्त! तदेवं भदन्त! यद् देवानुप्रियेण कथितम् तदेवमेव-सत्यमेवेति कथयित्वा 'समणा णिग्गंथा समणं भगवं महावीरं वंदंति नमंसंति' श्रमणा निर्ग्रन्थाः श्रमणं भगवंतं महावीरं वन्दन्ते नमस्यन्ति, 'वंदित्ता नमंसित्ता' वन्दित्वा नमस्यित्वा 'जेणेव

---

खलु अज्जो ! नीललेस्से पुढवीकाइए जाव अंतं करेइ' इसी प्रकार से हे आर्यो ! जो नीललेश्यावाला पृथिवीकायिक जीव है वह यावत् समस्त दुःखों का अन्त कर देता है इस प्रकार कृष्णनीलकापोतलेश्यावाले पृथिवीकायिक अप्कायिक और वनस्पतिकायिक जीव यावत् समस्त दुःखों का अन्त कर देते हैं। 'सच्चे णं एसमट्ठे' वह अर्थ सत्य है। सेवं भंते ! सेवं भंते ! त्ति' आप देवानुप्रियने जो कहा है वह सत्य ही कहा है २ इस प्रकार कहकर 'समणा निग्गंथा समणं भगवं महावीरं वंदंति, नमंसंति' श्रमणनिर्ग्रन्थों ने श्रमण भगवान् महावीर को वन्दना की, नमस्कार किया 'वंदित्ता नमंसित्ता जेणेव मागंदियपुत्ते अणगारे तेणेव उवागच्छंति' वन्दना नमस्कार करके फिर वे माकन्दिक पुत्र अनगार के पास आये। वहां आकर के 'मागंदियपुत्तं०' माकन्दिक पुत्र अनगार को वन्दना की नमस्कार किया। 'वंदित्ता नमंसित्ता एयमट्ठं सम्मं विणएणं भुज्जो २ खामेंति' वन्दना नमस्कार कर फिर

---

"एवं खलु अज्जो नीललेस्से पुढवीकाइए अंतं करेइ" એજ પ્રમાણે હે આર્યો જે નીલલેશ્યાવાળા પૃથ્વીકાયિક જીવો છે. તે પણ યાવત્ સમસ્ત દુઃખોનો અંત કરે છે. 'सच्चे णं एसमट्ठे" આ કથન સત્ય છે. सेवं भंते ! सेव भंते ! त्ति" હે ભગવન્ ! આપ દેવાનુપ્રિયે જે કહ્યું છે તે સત્ય છે. આપનું કથન યથાર્થ છે આ પ્રમાણે કહીને "समणा निगंथा समणं भगवं महावीरं वदंति नमंसंति" શ્રમણ ભગવાન મહાવીરને વંદના કરી નમસ્કાર કર્યા "वदित्ता नंमंसित्ता जेणेव मागंदियपुत्ते अणगारे तेणेव उवागच्छंति' વંદના નમસ્કાર કરીને પછી તેઓ માકંદીપુત્રની પાસે આવ્યા ત્યાં આવીને "मागंदियपुत्तं०" માકંદિપુત્ર અનગારને વંદના કરી નમસ્કાર કર્યા "वंदित्ता नमंसित्ता एयंमट्ठं सम्मं विणएणं भुज्जो भुज्जो खामेंति" વંદના નમસ્કાર કરીને તે પછી

मागंदियपुत्ते अणगारे' यत्रैव माकन्दिकपुत्रोऽनगारः 'तेणेव उवागच्छंति' तत्रैवो-पागच्छन्ति 'उवागच्छित्ता मागंदियपुत्तं अणगारं' उपागत्य माकन्दिकपुत्रमनगारम् 'वंदंति नमंसंति' वन्दन्ते नमस्यन्ति, 'वंदित्ता नमंसित्ता' वन्दित्वा नमस्यित्वा, 'एयमट्ठं' एतमर्थम् , 'सम्मं' सम्यक् 'विणएणं' विनयेन 'भुज्जो भुज्जो' भूयो भूयः 'खामेंति' क्षमापयन्ति, एतद्विषये माकन्दिकपुत्रात् क्षमां याचितवन्त इति भावः।

नन्वत्र पृथिव्यब्वनस्पतिजीवानामेव प्रश्नः कृतः तेजोवायूनां कुतो न कृत इति चेदत्रोच्यते पृथिव्यब्वनस्पतीनामेवानन्तरभवेमानुषत्वप्राप्त्याऽन्तक्रिया संभवति न तेजो वायूनाम् तेजो वायूनामानन्तर्येण मानुषत्वाप्राप्ते रतः पृथिव्यादित्रयस्यैव अन्तक्रियामाश्रित्य 'से णूणं' इत्यादिना प्रश्नः कृतो न तेजोवायूनामिति॥सू० १॥

---

उन्होंने उनकी बात को नहीं मानने की अपनी त्रुटि की-दोष की -बार २ बडे विनीत भाव से क्षमायाचना की। यहां सूत्र में पृथिवी, अप्, और वनस्पति जीवों की ही अन्तक्रिया के विषय में प्रश्न किया गया है-सो उसका कारण ऐसा है कि इन जीवों को अनन्तर भवमें मनुष्य पर्याय की प्राप्ति होती है-अतः उससे अन्त क्रिया इनमें ही संभवित है, तेज और वायु जीवों को नहीं क्योंकि उनको अनन्तर भवमें मानुषत्व पर्याय की प्राप्ति नहीं होती है। इसलिये पृथिव्यादिक तीन जीवों की ही अन्तक्रिया को लेकर 'से णूणं' इत्यादिरूप से प्रश्नकिया गया है,। और वायुको अन्तक्रिया को लेकर नहीं॥सू० १॥

---

તેઓએ માકંદિપુત્રના કથનને નહિ માનવારૂપ અપરાધની વારંવાર ઘણા જ વિનય ભાવથી ક્ષમા માગી. અહિયાં સૂત્રમાં, પૃથ્વી, અપ્, અને વનસ્પતિ જીવોની જ અંતક્રિયાના વિષયમાં પ્રશ્નો કરવામાં આવ્યા છે. તેનું કારણ એ છે કે એજ જીવોને જ પછીના ભવમાં મનુષ્ય પર્યાયની પ્રાપ્તિ થાય છે. જેથી તેઓની અંતક્રિયા આ પૃથ્વીકાયિક વિગેરેમાં જ સંભવે છે. તેજ અને વાયુ જીવોમાં સંભવતું નથી. કેમકે તેઓને બીજા ભવમાં મનુષ્યપણાની પર્યાયની પ્રાપ્તિ થતી નથી. તેથી પૃથ્વીઅપ્ વિગેરે ત્રણ જીવોની જ અંતક્રિયાને લઇને "से णूणं" ઈત્યાદિ રૂપથી પ્રશ્ન કરવામાં આવ્યો છે. તેજ અને વાયુ કાયિકની અન્તક્રિયાના સંબંધમાં પ્રશ્ન કરેલ નથી. ।। સૂત્ર ૧ ।।

अनन्तरम् अन्तक्रियोक्ता अथ अन्तक्रियायां ये निर्जरापुद्गलास्तेषां वक्तव्यतामभिधातुमाह-'तए णं से मागंदियपुत्ते' इत्यादि।

मूलम्-"तए णं से मागंदियपुत्ते अणगारे उट्ठाए उट्ठेइ, उट्ठाए उट्ठित्ता, जेणेव समणे भगवं महावीरे तेणेव उवागच्छइ, उवागच्छित्ता, समणं भगवं महावीरं वंदइ, नमंसइ, वंदित्ता, नमंसित्ता एवं वयासी-अणगारस्स णं भंते! भावियप्पणो सव्वं कम्मं निज्जरेमाणस्स सव्वं मारं मरमाणस्स सव्वं सरीरं विप्पजहमाणस्स चरिमं कम्मं वेएमाणस्स, चरिमं कम्मं निज्जरेमाणस्स चरिमं मारं मरमाणस्स, चरिमं सरीरं विप्पजहमाणस्स मारणंतियं कम्मं वेएमाणस्स मारणंतियं कम्मं निज्जरेमाणस्स मारणंतियं मारं मरमाणस्स मारणंतियं सरीरं विप्पजहमाणस्स जे चरिमा निज्जरा पोग्गला सव्वं लोगंपि णं ते ओगाहित्ता णं चिट्ठंति? हंता, मागंदियपुत्ता अणगारस्स णं भावियप्पणो जाव ओगाहित्ता णं चिट्ठंति सुहुमा णं ते पोग्गला पन्नत्ता समणाउसो!॥सू० २॥

छाया—ततः खलु स माकन्दिकपुत्रोऽनगार उत्थया उत्तिष्ठति उत्थया उत्थाय यत्रैव श्रमणो भगवान् महावीर स्तत्रैव उपागच्छति, उपागत्य श्रमणं भगवन्तं महावीरं वन्दते नमस्यति, वन्दित्वा नमस्यित्वा एवमवादीत्, अनगारस्य खलु भदन्त! भावितात्मनः, सर्वं कर्म निर्जरयतः, सर्वं मारं म्रियमाणस्य, सर्वं शरीरं विप्रजहतः, चरमं कर्म वेदयतः, चरमं कर्म निर्जरयतः, चरमं मारं म्रियमाणस्य, चरमं शरीरं विप्रजहतः, मारणान्तिकं कर्म वेदयतः, मारणान्तिकं कर्म निर्जरयतः, मारणान्तिकं मारं म्रियमाणस्य, मारणान्तिकं शरीरं विप्रजहतः ये चरमा निर्जराः पुद्गलाः सर्वं लोकमपि खलु ते अवगाह्य खलु तिष्ठन्ति? हन्त, माकन्दिकपुत्र! अनगारस्य खलु भावितात्मनो यावदवगाह्य खलु तिष्ठन्ति सूक्ष्माः खलु ते पुद्गलाः प्रज्ञप्ताः श्रमणायुष्मन्! ॥सू० २॥

टीका—'तए णं से मागंदियपुत्ते अणगारे' ततः खलु स माकन्दिकपुत्रोऽनगारः 'उट्ठाए उट्ठेइ' उत्थया उत्तिष्ठति 'उट्ठाए उट्ठित्ता' उत्थया-स्वशरीरशक्त्या उत्थाय 'जेणेव समणे भगवं महावीरे' यत्रैव श्रमणो भगवान् महावीरः 'तेणेव उवागच्छइ' तत्रैवोपागच्छति, 'उवागच्छित्ता' उपागत्य 'समणं भगवं महावीरं' श्रमणं भगवन्तं महावीरम् 'वंदइ, नमंसइ' वन्दते नमस्यति, 'वंदित्ता नमंसित्ता' वन्दित्वा, नमस्यित्वा 'एवं वयासी' एवमवादीत्, क्षमापनां कृत्वा गतेषु श्रमणेषु माकन्दिकपुत्रोऽनगारो भगवत्समीपमागतः आगत्य वन्दननमस्कारादिकं विधाय वक्ष्यमाणप्रकारेण भगवन्तं प्रति उक्तवान् इति भावः। किमुक्तवान्? तत्राह—

पहिले जो अन्त क्रिया कही गई। उस अन्तक्रिया में जो निर्जरा पुद्गल है उनकी वक्तव्यता को कहने के लिये सूत्रकार—'तए णं से मागंदियपुत्ते अनगारे' इत्यादि सूत्र कहते हैं-'तए णं से मागंदियपुत्ते अणगारे' इत्यादि।

टीकार्थ--'तए णं से मागंदियपुत्ते अणगारे' इसके बाद वे माकन्दिपुत्र अनगार' उट्ठाए उट्ठेइ' अपनी उत्थानशक्ति से उठे 'उट्ठाए उट्ठेत्ता' और उठकर 'जेणेव समणे भगवं महावीरे' जहां श्रमण भगवान् महावीर विराजमान थे-'तेणेव उवागच्छइ' वहीं पर पहुंचे। वहां पहुंच कर उन्होंने 'समणं भगवं महावीरं वंदइ नमंसइ' श्रमण भगवान् की वन्दना की, नमस्कार किया 'वंदित्ता नमंसित्ता' वन्दना नमस्कार करके, 'एवं वयासी' फिर उन्होंने उनसे ऐसा पूछा-अर्थात् क्षमापना करके जब श्रमण जन चले गये तब माकन्दिक पुत्र अनगार भगवान् के

પહેલાં જે અંતક્રિયા કહી છે, તે અંતક્રિયામાં જે નિર્જરા પુદ્ગલ છે. તે વિષયમાં કથન કરવા માટે સૂત્રકાર "तए णं से मागंदियपुत्ते अणगारे" ઇત્યાદિ સૂત્ર કહે છે.

ટીકાર્થ—"तए णं से मागंदियपुत्ते अणगारे" તે પછી તે માકંદીપુત્ર અનગાર "उट्ठाए उट्ठेइ" પોતાની ઉત્થાનશક્તિથી ઉઠ્યા. "उट्ठाए उट्ठित्ता" અને ઉઠીને "जेणेव समणे भगवं महावीरे" જ્યાં શ્રમણ ભગવાન મહાવીર બિરાજમાન હતા "तेणेव उवागच्छइ" ત્યાં જઇને તેઓએ "समणं भगवं महावीरं वंदइ नमंसइ" શ્રમણ ભગવાન્ મહાવીર સ્વામીને વંદના કરી નમસ્કાર કર્યા "वंदित्ता नमंसित्ता" વંદના નમસ્કાર કરીને "एवं वयासी" તે પછી તેઓએ પ્રભુને આ પ્રમાણે પૂછયું—અર્થાત્ શ્રમણજનો માકંદીપુત્ર અનગાર ભગવાનની પાસે ક્ષમાપના માગીને ગયા પછી માકંદીપુત્ર અનગાર ભગવાનની પાસે આવ્યા. આવીને તેઓએ ભગવાનને વંદના કરી

'अणगारस्स' इत्यादि। 'अणगारस्स णं भंते! अनगारस्य खलु भदन्त! 'भावियप्पणो' भावितात्मन', भावितः-वासितः-ज्ञानादिभावनया युक्तः कृत आत्मायेन स भावितात्मा तस्य भावितात्मनोऽनगारस्य केवलिनः, अत्र भावितात्मशब्देन केवली संग्राह्यः। 'सव्वं कम्मं वेएमाणस्स' सर्वं कर्म-वेदनीयनामगोत्राख्यभवोपग्राहित्रयरूपम् आयुष्कस्य भेदेनाभिधास्यमानत्वात् वेदयतः, 'सव्वं कम्मं निज्जरेमाणस्स' सर्वं कर्म निर्जरयतः, यत एव वेदयतः-अनुभवतः प्रदेशविपाकानुभवाभ्याम् अत एव सर्वं कर्म भवोपग्राहित्रयस्वरूपमेव निर्जरयतः-क्षपयतोऽनगारस्यात्मप्रदेशेभ्यः शातयत इत्यर्थः। 'सव्वं मारं मरमाणस्स' सर्वं मारं म्रियमाणस्य सर्व-सर्वायुः

पास-आये आकर उन्होंने उनकी वन्दना की। नमस्कार आदि क्रिया, फिर भगवान् से उन्होंने ऐसा पूछा-'अणगारस्स णं भंते! इत्यादि-यहां भाविनात्मा अनगार पदसे केवली का ग्रहण हुआ है। ज्ञानादिकी भावना से जो अपनी आत्मा को युक्त कर चुके होते हैं वे भावितात्मा कहलाते हैं। 'सव्वं कम्मं वेदेमाणस्स' इसमें सर्व कर्म से वेदनीय, नाम गोत्र इन तीन कर्मों का ग्रहण हुआ है। आयुका कथन स्वतन्त्र रूपसे किया जायगा, ये वेदनीय आदि चार आघातियाकर्म कहलाते हैं। और ये भवोपग्राही होते हैं। तथा च जो अनगार भावितात्मा है वेदनीय नाम, गोत्र इन तीन कर्मों की वेदना जो कर रहा है-वेदन होने के बाद निर्जरा होती है अतः प्रदेश और विपाक से जिन वेदनीयादिकर्मों का अनुभव होने के बाद एकदेश रूपसे जिसका क्षय हो रहा है, अर्थात् उस अनगार की आत्मा से जो धीरे २ थोडे रूपमें क्षपित हो रहे हैं, 'सव्वं मारं मरमाणस्स' आयुके अन्तिम क्षण में

નમસ્કાર કર્યા વંદના કરી નમસ્કાર કર્યો. તે પછી તેમણે આ પ્રમાણે પૂછયું—"अणगारस्स णं भंते!" ઇત્યાદિ અહિં ભાવિનાત્મા અનગાર પદથી કેવલીનું ગ્રહણ કરાયું છે. જ્ઞાનાદિની ભાવનાથી જે પોતાના આત્માને જ્ઞાનવાળો બનાવે છે તેઓ ભાવિતાત્મા કહેવાય છે. "सव्वं कम्मं वेदेमाणस्स" સર્વ કર્મથી વેદનીય, નામ, ગોત્ર, આ ત્રણે કર્મો ગ્રહણ થયા છે. આયુ કર્મનું કથન સ્વતંત્ર રૂપે કહેવામાં આવશે. વેદનીય વગેરે ચાર કર્મો આઘાતિયા કર્મ કહેવાય છે. અને તે ભવજનક હોય છે. જે અનગાર ભાવિતાત્મા છે અને વેદનીય નામ. ગોત્ર, એ ત્રણે કર્મોનું વેદન કરી રહ્યા હોય છે. વેદન થયા પછી નિર્જરા થાય છે. જેથી પ્રદેશ અને વિપાકથી જે વેદનીય વગેરે કર્મોનો અનુભવ થયા પછી એકદેશપણાથી જેનો ક્ષય થાય છે. અર્થાત્ તે અનગારના આત્માથી જે ધીરે ધીરે ક્ષપિત થઇ રહ્યા છે. 'सव्वं मारं

पुद्गलापेक्षम् मारणं-मरणमन्तिमं म्रियमाणस्य इत्यर्थः तथा 'सव्वं सरीरं विप्प जहमाणस्स' सर्वं शरीरं विप्रजहतः, सर्वं-समस्तम्, शरीरम्-औदारिकादिकम्-विप्रजहतः-परित्यजत इत्यर्थः, एतदेव विशेषिततरमाह-'चरिमं कम्मं वेएमाणस्स' चरमं कर्म वेदयतः, चरमं कर्म-आयुषश्चरमसमयवेद्यं कर्म वेदयतोऽनुभवतः, तथा-'चरिमं कम्मं निज्जरेमाणस्स' चरमं कर्म निर्जरयतः-चरमं कर्म-आयुषश्चरमसमयवेद्यम् कर्म निर्जरयत आत्मप्रदेशेभ्यः शातयतः, 'चरिमं मारं मरमाणस्स' चरमं मारं म्रियमाणस्य-चरमम्-अन्तिमम्-चरमायुः पुद्गलक्षयापेक्षं मारं-मरणं म्रियमाणस्य 'चरिमं सरीरं विप्पजहमाणस्स' चरमं शरीरं विप्रजहतः यत् शरीरं चरमावस्थायामस्ति तत्परित्यजतः, एतदेव विशदयन्नाह-'मारणंतियं कम्मं वेएमाणस्स' मारणान्तिकं कर्म वेदयतः-मरणस्य-सर्वायुष्कक्षयस्वरूपस्य अन्तं-समीपमिति मरणान्तः-आयुष्कचरमसमयस्तत्र भवम् मारणान्तिकं कर्म-भवोपग्राहित्रयरूपम् वेदयतोऽनुभवतः, एवम्-'मारणंतियं कम्मं निज्जरेमाणस्स'

---

जो प्राप्त हो चुका हैं, तथा औदारिक आदि गृहीत शरीरों को जो छोड रहा है। इसी प्रकार जो आयु के चरम समयमें वेद्यकर्म का वेदन कर रहा है, आयु के चरम समय में वेद्यकर्मका नाम चरम कर्म है। इसी चरम कर्म की जो निर्जरा कर रहा है-अपने आत्मप्रदेशों से जो उसकी-शातना दूर कर रहा है, जो जो पुद्गल क्षयापेक्ष मरण से मर रहा है, चरमावस्था में वर्तमानशरीर का जो त्याग कर रहा है, तथा जो आयुष्क के चरमसमय में वर्तमानभवोपग्राहि कर्मक्षय

---

मरमाणस्स' જે આયુના છેલ્લા ક્ષણ સુધી પહોંચ્યા છે અને ઔદારિક વગેરે શરીરોને છોડી રહ્યા છે, તેજ રીતે જે આયુષ્યના છેલ્લા સમયમાં વેદન કરવા લાયક કર્મનું નામ 'ચરમ કર્મ' છે. આ ચરમ કર્મની જે નિર્જરા કરી રહ્યા છે. જે પુદ્ગલ ક્ષયની અપેક્ષાથી મરણથી મરી રહ્યા છે. છેલ્લી અવસ્થામાં વર્તમાન શરીરનો જે ત્યાગ કરી રહ્યા છે. અને જે આયુષ્યના ચરમ સમયમાં વર્તતા ભવોપગ્રાહી ત્રણ કર્મોનું વેદન કરી રહ્યા છે. મરણની નજીકમાં રહેલા કર્મનો ક્ષય કરી રહ્યા છે, મારણાન્તિક આયુદંલિકોની અપેક્ષએ જે શરીરનો

मारणान्तिकं कर्म निर्जरयतः-मरणसमीपवर्त्ति कर्म क्षपयत इत्यर्थः 'मारणंतियं मारं मरमाणस्स' मारणान्तिकं मारं म्रियमाणस्य मारणान्तिकायुर्दलिकापेक्षं मारं म्रियमाणस्य मरणं कुर्वत इत्यर्थः 'मारणंतियं सरीरं विप्पजहमाणस्स' मारणान्तिकं-मरणसमीपवर्त्तिशरीरपुद्गलापेक्षं शरीरं विप्रजहतः-मुञ्चतः-अन्तिमशरीरं त्यजत इत्यर्थः शरीरस्य पुनरग्रहणात् 'जे चरिमा निज्जरा पोग्गला' ये चरमाः-अन्तिमा निर्जराः पुद्गलाः निर्जीर्यमाणाः पुद्गला इत्यर्थः 'ते णं' ते खलु 'पोग्गला' पुद्गलाः 'सुहुमा' सूक्ष्माः 'पण्णत्ता' प्रज्ञप्ताः 'समणाउसो' श्रमणायुष्मन्! हे श्रमण आयुष्मन्! हे भगवन्! 'सव्वं लोगंपि य णं ते ओगाहित्ता णं

---

का वेदन कर रहा है, मरणसमीपवर्त्ती कर्म का क्षय कर रहा है, मारणान्तिकायुर्दलिकों की अपेक्षा से जो मरण कर रहा है, मरणसमीपवर्ती शरीर पुद्गल की अपेक्षा से जो शरीर का त्याग कर रहा है-अर्थात् अन्तिम शरीर का जो त्याग कर रहा है। ऐसे उस भावितात्मा अनगार के जो 'चरिमा निज्जरा पोग्गला' अन्तिम-निर्जीर्यमाण पुद्गल है। 'ते णं खलु पोग्गला' वे पुद्गल 'सुहुमा' सूक्ष्म 'पण्णत्ता' कहे गये हैं। हे श्रमण! आयुष्मन्! 'सव्वं लोगं पि य णं' ओगाहित्ता णं चिट्ठंति' वे सूक्ष्म पुद्गल क्या समस्त लोक को भी अवगाहित करके ठहरे हुए हैं? इसके उत्तर में प्रभु कहते हैं-'हंता मागंदियपुत्ता०' हां माकन्दिकपुत्र! पूर्वोक्त विशेषण सम्पन्न उस भावितात्मा अनगार के वे सूक्ष्म पुद्ल यावत् सम्पूर्ण लोक को अवगाहित करके उसमें ठहरे हुए हैं।

---

ત્યાગ કરી રહ્યા છે, અર્થાત્ અંતિમ શરીરનો જે ત્યાગ કરી રહ્યા છે. એવા તે ભાવિતાત્મા અનગારના જે 'चरिमा निज्जरा पोग्गला' અન્તિમ નિર્જીર્યમાણ પુદ્ગલો છે. 'तेणं खलु पोग्गला' તે પુદ્ગલ 'सुहुमा' સૂક્ષ્મ 'पण्णत्ता' કહ્યા છે. હે શ્રમણ આયુષ્મન્ "सव्व लोगं पि य णं ओगाहित्ता णं चिट्ठंति" તે એવા સૂક્ષ્મ પુદ્ગલો સમસ્તલોકને અવગાહિત કરીને રહ્યા છે? તેના ઉત્તરમાં પ્રભુ કહે છે કે 'हंता मागंदियपुत्ता' હા માકંદિયપુત્ર પૂર્વોક્ત વિશેષણોવાળા તે ભાવિતાત્મા અનગારના જે સૂક્ષ્મ પુદ્ગલ યાવત્ સંપૂર્ણ લોકને અવગાહિત કરીને તેમાં રહેલ છે.

चिट्ठंति' सर्वं लोकमपि खलु ते अवगाह्य खलु तिष्ठन्ति किम् ? इति प्रश्नः। भगवानाह-'हंता मागंदियपुत्ता' इत्यादि, 'हंता मागंदियपुत्ता' हन्त, इति स्वीकारे हे माकन्दिक पुत्र! 'अणगारस्स णं भावियप्पणो जाव ओगाहित्ता णं चिट्ठंति' अनगारस्य खलु भावितात्मनो यावद् अवगाह्य खलु तिष्ठन्ति, अत्र यावत्पदेन 'सव्वं कम्मं वेएमाणस्स' इत्यारभ्य 'सव्वं लोगंपि णं ते' इत्यन्तस्य प्रश्नोक्तस्यात्रोत्तरे संग्रहः कार्यः, प्रायः प्रश्नस्यैव उत्तरतया विपरिणामात्। कथमवगाह्य तिष्ठन्तीत्यत एवाह 'सुहुमा णं ते पोग्गला पन्नत्ता समणाउसो' इति। हे श्रमणायुष्मन्! माकन्दिकपुत्र! ते-पूर्वोक्ताः पुद्गलाः-निर्जरापुद्गलाः सूक्ष्माः प्रज्ञप्ताः, अत एव ते सर्वं लोकमपि अवगाह्य तिष्ठन्तीति भावः ॥सू० २॥

---

यहां यावत् शब्द से 'सव्वं कम्मं वेदेमाणस्स' यहां से लेकर 'सव्वं लोगं पि णं ते' यहां तक के प्रश्नोक्त पाठ का इस उत्तर में संग्रह किया गया है। क्योंकि प्रायः करके प्रश्न ही उत्तररूप में परिणम गया है। समस्त लोक को अवष्टब्ध-व्याप्त करके वे निर्जरापुद्गल कैसे उसमें ठहरते हैं-तो इसके लिये कहा गया है कि वे निर्जरापुद्ल 'सुहुमा णं ते पन्नत्ता' सूक्ष्म कहे गये हैं। इसीलिये वे समस्त लोक को अवगाहित करके उसमें ठहरे हुये हैं ॥ सू० २ ॥

---

અહિં યાવત્ શબ્દથી 'સવ્વં કમ્મં વેદેમાણસ્સ' આવાકયથી લઇને 'સવ્વં લોગંપિ ણ તે' અહિં સુધીનો પ્રશ્ન રૂપ પાઠનો આ ઉત્તર વાકયમાં સંગ્રહ કરી લેવો. કેમકે ઘણેભાગે પ્રશ્ન જ ઉત્તરરૂપથી પરિણમેલ છે. સમસ્ત લોકને વ્યાપ્ત કરીને તે નિર્જરા પુદ્ગલ તેમાં કેવી રીતે રહે છે ? એ માટે કહેવામાં આવ્યું છે કે તે નિર્જરા પુદ્ગલ 'સુહુમા ણં તે પન્નત્તા' સૂક્ષ્મ કહ્યા છે તેથી સમસ્ત લોકને અવગાહિત કરીને તે તેમાં રહેલ છે ॥ સૂ૦ ૨ ॥

केवली सर्वमपि त्रैकालिकं सूक्ष्मं स्थूलं वा जीवादिकं जानात्येवेति कथितम्, साम्प्रतं छद्मस्थविषये प्रश्नयन्नाह–'छउमत्थे णं' इत्यादि,

मूलम्–"छउमत्थे णं भंते! मणुस्से तेसिं निज्जरापोग्गलाणं किंचि अण्णत्तं वा णाणत्तं वा एवं जहा इंदियउद्देसए पढमे जाव वेमाणिया जाव तत्थ णं जे ते उवउत्ता ते जाणंति पासंति आहारेंति से तेणट्ठेणं निक्खेवो भाणियव्वो त्ति, न पासंति आहारेंति ॥सू० ३॥

छाया– छद्मस्थः खलु भदन्त ! मनुष्यः तेषां निर्जरापुद्गलानां किञ्चिदन्यत्वं वा नानात्वं वा, एवं यथा इन्द्रियोद्देशके प्रथमे यावद्वैमानिकाः, यावत्तत्र खलु ये ते उपयुक्तास्ते जानन्ति पश्यन्ति आहरन्ति तत् तेनार्थेन निक्षेपो भणितव्य इति न पश्यन्ति आहरन्ति ॥सू० ३॥

टीका–'छउमत्थे णं भंते !' छद्मस्थः खलु भदन्त ! छद्मस्थश्चेह निरतिशयो ग्राह्यो न तु सातिशयः 'मणुस्से' मनुष्यः 'तेसिं निज्जरापोग्गलाणं' तेषां निर्जरा पुद्गलानाम् 'किंचि' किञ्चित् 'अण्णत्तं वा णाणत्तं वा जाणइ वा, पासइ वा आहा-

---

केवली समस्त त्रैकालिक सूक्ष्म स्थूल जीवादिक को जानते ही है ऐसा कहा गया है, अब छद्मस्थ के विषय में प्रश्नोत्तर रूपमें कथन किया जाता है–'छउत्थे णं भंते! मनुस्से तेसिं निज्जरा पोग्गला णं' इत्यादि।

टीकार्थ––यहां छद्मस्थ शब्द से जो निरतिशय छद्मस्थ है उस का ग्रहण हुआ है, सातिशय छद्मस्थ का नहीं। इस प्रकार यहां माकन्दिक पुत्र अनगार ने प्रभु से ऐसा पूछा है कि हे भदन्त ! जो मनुष्य निरतिशय छद्मस्थ है वह 'तेसिं निज्जरापोग्गलाणं' उन निर्जरा

---

કેવળી કેવળજ્ઞાનથી ત્રણે લોકના સમસ્ત સઘળા સૂક્ષ્મ જીવ અને સ્થૂળ જીવ વગેરેને સાક્ષાત્ જાણે છે તેમ કહેવાઈ ગયું છે. હવે છદ્મસ્થના વિષયમાં પ્રશ્નોત્તર રૂપમાં કથન કરવામાં આવે છે. 'छउमत्थे णं भंते ! मणुस्से निज्जरापोग्गलाणं' ઇત્યાદિ.

ટીકાર્થ—છદ્મસ્થ સાતિશય અને નિરતિશય એમ બે પ્રકારના છે. તેમાં અહિયાં છદ્મસ્થ શબ્દથી જે નિરતિશય છદ્મસ્થ છે, તેઓનું ગ્રહણ થયું છે. સાતિશય છદ્મસ્થોનું નહીં. આ રીતે અહિયાં માકંદીપુત્ર અનગારે પ્રભુને એવું પૂછ્યું છે કે–હે ભગવાન્ જે મનુષ્ય નિરતિશય છદ્મસ્થ છે, તે 'तेसिं निज्जरा

रेइ वा' अन्यत्वं वा नानात्वं वा जानाति वा, पश्यति वा आहरति वा, अन्यत्वम्-अनगारद्वयसंबन्धिनो ये पुद्गला स्तेषां भेदम्, नानात्वम्-वर्णादिकृतं वा भेदमिति 'एवं जहा इंदियउद्देसए पढमे' एवं यथा इन्द्रियोद्देशके प्रथमे, एवं यथा-प्रज्ञापनासूत्रस्थपञ्चदशपदस्य प्रथमे इन्द्रियोद्देशके कथितं तथा भणितव्यम् विशेषस्त्वयम् प्रज्ञापनागतप्रकरणे 'गोयमा' इति संबोधनम्, अत्र च 'मागंदियपुत्ते' इति संबोधनपदं भणितव्यम्। 'जाव वेमाणिया' यावद् वैमानिकाः, 'आणत्तं

---

पुद्गलों के 'किंचि' क्या 'अण्णत्तं वा णाणत्तं वा' अन्यत्व को या नानात्व को 'जाणइ वा पासइ वा' जानता है या देखता है? या उन्हें ग्रहण करता है? जो अनगारों के निर्जरा पुद्गल हैं उन पुद्गलों में जो भेद है वह नानात्व है अथवा उनमें जो वर्णादिकृत भेद है वह नानात्व है। इसके उत्तर में प्रभु कहते हैं। 'एवं जहा इंदिय उद्देसए०' जैसा प्रज्ञापना सूत्र के पन्द्रहवें पद के प्रथम इन्द्रिय उद्देशक में कहा गया है। उसी प्रकार यहां पर कहलेना चाहिये। यदि कोई विशेषता है वह केवल संबोधन को ही लेकर है। बाकी और कथन में कोई विशेषता नहीं है। अर्थात् प्रज्ञापनागत प्रकरणमें 'गोयमा' ऐसा सम्बोधन पद है और यहां 'मागंदिपुत्ते' ऐसा संबोधन पद है। 'जाव वेमाणिया' इसका तात्पर्य प्रज्ञापना प्रकरण के अनुसार ऐसा है-नारक से लेकर वैमानिकदेवपर्यन्त छद्मस्थजीव क्या निर्जरापुद्गलों के

---

पोग्गलाणं' ते निर्જरा પુદ્ગલોને 'किंचि अण्णत्तं वा णाणत्तं वा' શું અન્યત્વ ને અથવા નાનાત્વને 'जाणइ पासइ' જાણે છે? કે દેખે છે? અથવા તેને ગ્રહણ કરે છે? એ અનગારોના જે નિર્જરા પુદ્ગલ છે. તે પુદ્ગલોમાં જે ભેદ છે તે 'નાનાત્વ છે. અથવા તેમાં જે વર્ણ ગંધ રસસ્પર્શ વગેરે ભેદ છે, તે નાનાત્વ છે આ પ્રશ્નના ઉત્તરમાં પ્રભુ કહે છે કે-'एवं जहा इंदिय-उद्देसए०' પ્રજ્ઞાપના સૂત્રના પંદરમાં પદના પહેલા ઈન્દ્રિય ઉદ્દેશામાં કહેવામાં આવ્યું છે તેજ રીતે અહિં પણ તે સઘળું કથન સમજવું. તેમાં જે વિશેષતા છે. તે સંબોધન પુરતી જ છે. બાકીના બીજા કથનમાં કંઈ જ વિશેષતા નથી' અર્થાત્ પ્રજ્ઞાપનાના પ્રકરણમાં 'गोयमा' એ પ્રમાણે સંબોધન છે. અને અહિંયા 'माकंदियपुत्ते' એ પ્રમાણેનું સંબોધન છે. અર્થાત્ પ્રજ્ઞાપનાના પ્રકરણમાં ગૌતમસ્વામીને ઉદ્દેશીને કથન કરાયેલ છે. અને અહિંયા માકંદીપુત્રને ઉદ્દેશીને કથન કરવામાં આવ્યું છે. 'जाव वेमाणिया' તે પ્રજ્ઞાપના સૂત્રનું પ્રકરણ યાવત્ નારકથી આરંભીને વૈમાનિક પર્યન્ત ગ્રહણ કરવું. કહેવાનું તાત્પર્ય

वा नाणत्तं वा' इत्यस्याग्रे 'ओमत्तं वा तुच्छत्तं वा' इत्यारभ्य नैरयिकाद्वैमानिक-पर्यन्तं प्रज्ञापनाप्रकरणं योजनीयम्। तत्र छद्मस्थसूत्रालापकश्चैत्थम्–'ओमत्तं वा तुच्छत्तं वा गरुयत्तं वा लहुयत्तं वा जाणइ पासइ? गोयमा! नो इणट्ठे समट्ठे। से केणट्ठेणं भंते! एवं वुच्चइ, छउमत्थे णं मणूसे तेसिं निज्जरापुग्गलाणं णो किंचि अणत्तं वा ६ जाणइ पासइ? गोयमा! देवे वि य णं अत्थेगइए जे णं तेसिं निज्जरापोग्गलाणं णो किंचि आणत्तं वा ६ जाणइ पासइ से तेणट्ठेणं मागंदिय-

अन्यत्व को, नानात्वको। तथा इसके आगे, आये हुये। 'ओमत्तं वा, तुच्छं त्तं वा, गरुयत्तं वा, लहुयत्तं वा जाणइ पासइ' इस पाठके अनुसार ऊनत्व को–निस्सारत्वको–गुरुत्वको, एवं लघुत्व को जानता है? और देखता है? यह प्रश्न प्रज्ञापना सूत्रमें गौतमने प्रभु से किया है। प्रभुने इसके उत्तरमें ऐसा कहा है। 'गोयमा!' हे गौतम 'णो इणट्ठे समट्ठे' यह अर्थ समर्थ नहीं है। पुनः गौतमने प्रभु से ऐसा पूछा है–'से केणट्ठेणं भंते! एवं वुच्चइ, हे भदन्त! ऐसा आप किस कारण से कहते हैं कि–'छउमत्थे णं मणूसे तेसिं निज्जरापुग्गलाणं णो किंचि आणत्तं वा ६ जाणइ पासइ' छद्मस्थ मनुष्य उन निर्जरापुद्गलों के अन्यत्व आदि को नहीं जानता है? और नहीं देखता है? उत्तर में प्रभु कहते हैं–'गोयमा! देवे वि य णं अत्थेगइए जे णं तेसिं निज्जरा-पोग्गलाणं णो किंचि आणत्तं वा ६ जाणइ पासइ' हे गौतम! देवों में भी कोई एकदेव उन निर्जरापुद्गलों के अन्यत्व आदि को जानता

એ છે કે–નારકથી આરંભીને વૈમાનિક દેવ પર્યંત છદ્મસ્થ જીવ શું નિર્જરા પુદ્ગલોના અન્યત્વને, નાનાત્વને તથા પહેલાં આવેલ 'ओमत्त वा, तुच्छत्त वा गरुयत्तं वा लहुयत्त वा, जाणइ पासइ,' ઉનત્વને–કે તુચ્છત્વને–એટલે કે નિઃસારને –ગુરૂત્વને અને લઘુત્વને જાણે છે? કે દેખે? આ પ્રશ્ન પ્રજ્ઞાપના સૂત્રમાં ગૌતમ સ્વામીએ પ્રભુને પૂછેલ છે. તેના ઉત્તરમાં પ્રભુએ આ પ્રમાણે કહ્યું છે–– 'गोयमा' હે ગૌતમ! 'णो इणट्ठे समट्ठे' આ કથન બરાબર નથી. ફરીથી ગૌતમસ્વામી એ એવું પૂછેલ છે કે–'से केणट्ठेणं भंते! एवं वुच्चइ' હે ભગવન્ આપ એવું શા કારણથી કહો છો? કે 'छउमत्थे णं मणूसे तेसिं निज्जरापुग्गलाणं णो किंचि आणत्तं वा ६ जाणइ पासइ' છદ્મમનુષ્ય તે નિર્જરા પુદ્ગલોના અન્યત્વ વગેરેને જાણતા નથી? અને દેખતા નથી? તેના ઉત્તરમાં પ્રભુ કહે છે કે–'गोयमा! देवे वि य णं अत्थेगइए तेणं तेसिं निज्जरापोग्गलाणं णो किंचि आणत्तं वा ६ जाणइ पासइ' હે ગૌતમ! દેવોમાં પણ કોઈ એક દેવ નિર્જરા પુદ્ગલોના અન્યત્વ વિગેરેને જાણે છે અને દેખે છે. બધા દેવ નહિં 'से तेण-

पुत्ता! एवं वुच्चइ, छउमत्थे णं मणूसे तेसिं निज्जरापुग्गलाणं नो किंचि अणत्तं वा ६ जाणइ पासइ, सुहुमा णं ते पुग्गला पन्नत्ता समणाउसो! सव्वलोगं पि य णं ते ओगाहित्ता णं चिट्ठंति।

अन्यत्वं वा तुच्छत्वं वा गुरुकत्वं वा लघुकत्वं वा जानाति पश्यति? गौतम! नायमर्थः समर्थः। तत्केनार्थेन भदन्त! एवमुच्यते-छद्मस्थः, खलु मनुष्यः तेषां निर्जरापुद्गलानां नो किञ्चिद् अन्यत्वं वा ६ जानाति पश्यति? गौतम! देवोऽपि च खलु अस्त्येककः यः खलु तेषां निर्जरापुद्गलानां नो किञ्चिद् अन्यत्वं

है और देखता है-सब देव नहीं। 'से तेणट्ठेणं मागंदियपुत्ता, एवं वुच्चइ छउमत्थेणं मणूसे तेसिं निज्जरा पोग्गलाणं नो किंचि आणत्तं वा ६ जाणइ पासइ' इस कारण हे माकन्दिकपुत्र! मैंने ऐसा कहा है कि-छद्मस्थ मनुष्य उन निर्जरा पुद्गलों के अन्यत्व आदि को नहीं जानता है। और नहीं देखता है। 'सुहुमा णं ते पुग्गला पन्नत्ता समणाउसो!' हे श्रमण! आयुष्मन्! वे निर्जरा पुद्गल सूक्ष्म कहे गये हैं। 'सव्वलोगं पि य णं ते ओगाहित्ता णं चिट्ठंति' वे सूक्ष्म निर्जरा पुद्गल समस्त लोकाकाश को व्याप्त कर ठहरे हुए हैं। इत्यादि यह पाठ छद्मस्थ सूत्रगत है। 'देवे वि य णं अत्थेगइए' ऐसा जो कहा गया है सो उसका मतलब ऐसा है कि मनुष्य की अपेक्षा देव प्रायः पटुप्रज्ञावाला होता है अतः अब देवों में भी कोई एकदेव कि जो विशिष्टावधिज्ञान से विकल है उन निर्जरा पुद्गलों को अन्यत्वादि ६ को नहीं जानता है तो छद्मस्थमनुष्य उन्हें कैसे जान सकता है। कोई एक जानता है ऐसा

ट्ठेणं मागंदियपुत्ता एवं वुच्चइ छउमत्थे णं मणूसे तेसिं निज्जरापोग्गलाणं नो किंचि आणत्तं वा ६ जाणइ पासइ' તે કારણે હે માકંદીપુત્ર મેં એવું કહ્યું છે કે-છદ્મસ્થ મનુષ્ય તે નિર્જરા પુદ્ગલોના અન્યત્વ આદિને જાણતા નથી. 'सुहुमा णं ते पुग्गला पन्नत्ता समणाउसो' હે શ્રમણ આયુષ્મન્ તે નિર્જરા પુદ્ગલ સૂક્ષ્મ કહ્યા છે. 'सव्वलोगंपि य णं ते ओगाहित्ता णो चिट्ठंति' તે સૂક્ષ્મ નિર્જરા પુદ્ગલ બધાજ લોકાકાશને વ્યાપ્ત કરીને રહેલા ઈત્યાદિ આ પાઠ છદ્મસ્થ સૂત્રનો છે. 'देवे वि य णं अत्थेगइए' આ પ્રમાણે જે કહેવામાં આવ્યું છે તેનો ભાવ એવો છે કે મનુષ્યથી દેવ પ્રાયઃ પટુપ્રજ્ઞાવાળા હોય છે. જેથી દેવોમાં પણ કોઈ એક દેવ કે જે વિશેષ પ્રકારના અવધિજ્ઞાનવાળો હોય છે તેજ જાણે છે. તે વગર બીજા દેવ નિર્જરા પુદ્ગલોના અન્યત્વ વગેરેને જાણતા નથી. તો પછી છદ્મસ્થ મનુષ્ય તેને કેવી રીતે જાણી શકે? કોઈ એક જાણે

वा ६ जानाति पश्यति, तत्तेनार्थेन माकन्दिकपुत्र! एवमुच्यते, छद्मस्थः खलु मनुष्यः तेषां निर्जरापुद्गलानां नो किञ्चिद् अन्यत्वं वा ६ जानाति पश्यति, सूक्ष्माः खलु ते पुद्गलाः मज्ञप्ताः श्रमणायुष्मन्! सर्वलोकमपि च खलु ते अवगाह्य खलु तिष्ठन्ति, इतिच्छाया ॥

व्याख्या स्पष्टा। नवरं तत्र 'ओमत्तं' अवमत्वम्-ऊनत्वम्, "तुच्छत्तं" तुच्छत्वम्-निस्सारत्वम्, 'गरुयत्तं लघुयत्तं' गुरुकत्वं लघुकत्वं च स्पष्टम्। पुनश्च प्रश्नस्योत्तरसूत्रे-'देवे वि य णं अत्थेगइए' इति, प्रायेण देवः पटुप्रज्ञावान् भवतीति मनुष्येभ्यः देवग्रहणम्। तत्र देवोऽपि चास्त्येककः इति, यः कश्चिद्विशिष्टावधिज्ञानविकलः स तेषां निर्जरापुद्गलानां किञ्चिद् अन्यत्वादि, न जानाति तर्हि कथं पुनर्मनुष्यो जानातीति। एकः कश्चिज्जानातीति प्रोक्तं तद् विशिष्टावधिज्ञानयुक्तो देवो जानातीति मत्वा कथितमिति। कियत्पर्यन्तमित्याह-'जाव तत्थ णं जे ते उवउत्ता ते जाणंति पासंति-आहारेंति, से तेणट्ठेणं,' यावत् तत्र खलु ये ते उपयुक्तास्ते जानन्ति पश्यन्ति आहरन्ति तत्तेनार्थेन-तत् तेन कारणेन 'निक्खेवो भाणियव्वो त्ति' निक्षेपो भणितव्य इति, तत्र निक्षेप इति-न्यासः-सूत्रन्यास इति छद्मस्थमनुष्यादारभ्य वैमानिकपर्यन्तः सर्वोऽपि पाठः व्याख्यातसूत्रान्तरवर्ती

---

जो कहा गया है वह विशिष्ट अवधिज्ञानयुक्त देव जानता है ऐसा मानकर कहा गया है। और वह 'जाव तत्थ णं जे ते उवउत्ता ते जाणंति, आहारेंति, से तेणट्ठेणं' यहां तक कहा गया है। 'निक्खेवो भाणियव्वोत्ति' ऐसा जो कहा है। उसका तात्पर्य ऐसा है कि छद्मस्थ मनुष्य से लेकर वैमानिकपर्यन्त सभी पाठ यहां ग्रहण कर लेना चाहिये। यह पाठ व्याख्यातसूत्रानन्तरवर्ती चतुर्विंशतिदण्डकरूप है। और प्रज्ञापना सूत्रके १५ वें पदमें स्थित प्रथमेन्द्रियोद्देशक का है। इसकी व्याख्या मैंने उसकी प्रमेयबोधिनी टीकामें की है। सो वहीं से

---

છે તેમ કહ્યું છે, તે વિશેષ પ્રકારના અવધિજ્ઞાનવાળો દેવ જાણે છે તેમ માનીને કહેવામાં આવ્યું છે. અને તે 'जाव तत्थ णं जे ते उवउत्ता ते जाणंति, पासंति, आहारेंति से तेणट्ठेणं' તેમાં જે ઉપયોગવાળા છે તેઓ જાણે છે, જુએ છે. અને તેનો આહાર કરે છે તે કારણે મેં તે પ્રમાણે કહ્યું છે. આવાકય પર્યંત કહેવામાં આવ્યું છે 'निक्खेवो भाणियव्वोत्ति' એવું જે કહ્યું છે, તેનું તાત્પર્ય એ છે કે-છદ્મસ્થ મનુષ્યથી લઇને વૈમાનિક સુધીનો બધો જ પાઠ અહિયાં ગ્રહણ કરવો. આ પાઠ આ સૂત્રના પછીના સૂત્રમાં ચતુર્વિંશતિ (ચોવીસ) દંડકરૂપ છે. અને પ્રજ્ઞાપના સૂત્રના પંદરમાં પદમાં પ્રથમ ઇન્દ્રિય ઉદ્દેશકનો છે તેની વ્યાખ્યા મેં તે સૂત્રની પ્રમેયબોધિની ટીકામાં કરી છે. તે ત્યાં જોઇ લેવી

चतुर्विंशतिदण्डकरूपः प्रज्ञापनासूत्र पञ्चदशपदस्थप्रथमेन्द्रियोद्देशकस्य अत्राध्येतव्यः, तद्व्याख्या तत्र मत्कृतायां प्रमेयबोधिनीटीकायां विलोकनीया। कियत्पर्यन्त-मित्याह–'न पासंति आहारेंति' न पश्यन्ति आहरन्ति, सूक्ष्मपुद्गलान् न जानन्ति न पश्यन्ति आहरन्ति–सूक्ष्मपुद्गलानामाहारमात्रं कुर्वन्ति। अत्र आहार ओजाहार एव ज्ञातव्यः। यावद्वैमानिकाः' इत्यनेन सप्तनारकदशभवनपतिपञ्चस्थावर-विकलेन्द्रियत्रयतिर्यक्पञ्चेन्द्रियवानव्यन्तरज्योतिष्काः, एते नारकवत् न जानन्ति, पश्यन्ति केवलमाहरन्त्येव सामान्यमनुष्यवैमानिकाः एके जानन्ति, पश्यन्ति, आहरन्ति, एके न जानन्ति न पश्यन्ति केवलमाहरन्त्येवेति ॥सू० ३॥

---

देख लेना चाहिये। यह पाठ न पासंति आहारेंति' यहां तक का यहां कहना चाहिये। इस प्रकार जो उपयोग रहित हैं वे निर्जरा के सूक्ष्म पुद्गलों को न जानते हैं और न देखते हैं। किन्तु सूक्ष्म पुद्गलों को आहार मात्रारूप से ग्रहण करते हैं। यहां आहार से ओजआहार ही लिया गया है। 'जाव वेमाणिया' पदसे सूत्रकारने यह समझाया है कि सातों पृथिवियों के नारक दश भवनपतिदेव, पांच स्थावर, तीन विकलेन्द्रिय, तिर्यञ्च, वानव्यन्तर एवं ज्योतिष्क ये सब नारक की तरह उन निर्जरा सूक्ष्मपुद्गलों को न जानते हैं, न देखते हैं। केवल वे इनका आहार ही करते हैं। अर्थात् वे केवल इन्हें ग्रहण ही करते हैं। सामान्य मनुष्य तथा वैमानिक इनमें से कोई एक इन्हें जानते हैं। और देखते हैं तथा इनको ग्रहण करते हैं। और कोई एक न इन्हें जानते हैं और न देखते हैं–केवल ग्रहण ही करते हैं ॥ सू० ३ ॥

---

આ પાઠ 'न पासंति आहारेंति' અહિં સુધીનો પાઠ અહિયાં ગ્રહણ કરેલ છે. આ રીતનો જેને ઉપયોગ છે. તેઓ નિર્જરાના સૂક્ષ્મ પુદ્ગલોને જાણતા નથી અને દેખતા નથી. પરંતુ સૂક્ષ્મ પુદ્ગલોને આહારરૂપે જ માત્ર ગ્રહણ કરે છે અહિયાં આહારથી ઓજ આહાર ગ્રહણ કરેલ છે. 'यावद्वैमानिकाः' આ વાકયથી સૂત્રકારે એ સમજાવ્યું છે કે–સાતે પૃથ્વીયોના નારક જીવ દશભવનપતિદેવ પાંચ સ્થાવર ત્રણ વિકલેન્દ્રિય, પચેન્દ્રિય, તિર્યંચ, મનુષ્ય વાનવ્યન્તર અને જ્યોતિષ્ક એ બધા નારકોની માફક તે નિર્જરાના સૂક્ષ્મ પુદ્ગલોને જાણતા નથી અને દેખતા નથી. તેઓ કેવળ તેનો આહારજ કરે છે. અર્થાત્ તેઓ કેવળ તેને ગ્રહણ જ કહે છે. સામાન્ય મનુષ્ય તથા વૈમાનિક તેમાંથી કોઈ એક તેને જાણે છે અને દેખે છે. અને તેને ગ્રહણ કરે છે. અનેક કોઈ એક તેને જાણતા નથી. અને દેખતા નથી–કેવળ ગ્રહણ જ કહે છે. ॥સૂ૦ ૩॥

इतः पूर्वसूत्रे निर्जरापुद्गलाः कथिताः, ते च पुद्गलाः, बन्धे सत्येव भवन्तीति बन्धनिरूपणाय प्रक्रमयन्नाह-'कइविहे णं भंते ! इत्यादि ।

मूलम्-कइविहे णं भंते ! बंधे पन्नत्ते, मागंदियपुत्ता ! दुविहे बंधे पन्नत्ते तं जहा-दव्वबंधे य भावबंधे य। दव्वबंधे णं भंते! कइविहे पन्नत्ते? मागंदियपुत्ता ! दुविहे पन्नत्ते तं जहा-पओगबंधे य वीससाबंधे य। वीससाबंधे णं भंते! कइविहे पन्नत्ते? मागंदियपुत्ता? दुविहे पन्नत्ते तं जहा-साइयवीससाबंधे अणाइयवीससाबंधे य। पओगबंधे णं भंते! कइविहे पन्नत्ते? मागंदियपुत्ता! दुविहे पन्नत्ते, तं जहा-सिढिलबंधेणबंधे य घणियबंधणबंधे य। भावबंधे णं भंते ! कइविहे पन्नत्ते? मागंदियपुत्ता! दुविहे पन्नत्ते, तं जहा-मूलपगडिबंधे य, उत्तरपगडिबंधे य। नेरइयाणं भंते! कइविहे भावबंधे पन्नत्ते? मागंदियपुत्ता ! दुविहे भावबंधे पन्नत्ते, तं जहा-मूलपगडिबंधे य उत्तरपगडिबंधे य, एवं जाव वेमाणियाणं। नाणावरणिज्जस्स णं भंते! कम्मस्स कइविहे भावबंधे पन्नत्ते? मागंदियपुत्ता! दुविहे भावबंधे पन्नत्ते, तं जहा-मूलपगडिबंधे य उत्तरपगडिबंधे य। नेरइयाणं भंते ! नाणावरणिज्जस्स कम्मस्स कइविहे भावबंधे पन्नत्ते? मागंदियपुत्ता ! दुविहे भावबंधे पन्नत्ते? तं जहा-मूलपगडिबंधे य उत्तरपगडिबंधे य, एवं जाव वेमाणियाणं, जहा नाणावरणिज्जे णं दंडओ भणियो एवं जाव अंतराइए णं भाणियव्वो ॥सू० ४॥

छाया-कतिविधः खलु भदन्त ! बन्धः प्रज्ञप्तः ? माकंदिकपुत्र ! द्विविधः प्रज्ञप्तः तद्यथा-द्रव्यबन्धश्च भावबन्धश्च। द्रव्यबन्धः खलु भदन्त ! कतिविध

प्रज्ञप्तः? माकन्दिकपुत्र! द्विविधः प्रज्ञप्तः, तद्यथा प्रयोगबन्धश्च विस्रसाबन्धश्च। विस्रसाबन्धः खलु भदन्त! कतिविधः प्रज्ञप्तः? माकन्दिकपुत्र! द्विविधः प्रज्ञप्तः, तद्यथा सादिकविस्रसाबन्धश्च अनादिकविस्रसाबन्धश्च। प्रयोगबन्धः खलु भदन्त! कतिविधः प्रज्ञप्तः? माकन्दिकपुत्र! द्विविधः प्रज्ञप्तः, शिथिलबन्धनबन्धश्च गाढ बन्धनबन्धश्च। भावबंधः खलु भदन्त! कतिविधः प्रज्ञप्तः? माकन्दिकपुत्र! द्विविधः प्रज्ञप्तः तद्यथा मूलप्रकृतिबन्धश्च उत्तरप्रकृतिबन्धश्च। नैरयिकाणां भदन्त! कतिविधो भावबन्धः प्रज्ञप्तः? माकन्दिकपुत्र! द्विविधो भावबन्धः प्रज्ञप्तः, तद्यथा मूलप्रकृतिबन्धश्च उत्तरप्रकृतिबन्धश्च, एवं यावद्वैमानिकानाम्। ज्ञानावरणीयस्य खलु भदन्त! कर्मणः कतिविधो भावबन्धः प्रज्ञप्तः? माकन्दिकपुत्र! द्विविधो भावबन्धः प्रज्ञप्तः, तद्यथा मूलप्रकृतिबन्धश्च उत्तरप्रकृतिबन्धश्च! नैरयिकाणां भदन्त! ज्ञानावरणीयस्य कर्मणः कतिविधो भावबन्धः प्रज्ञप्तः? माकन्दिकपुत्र! द्विविधो भावबन्धः प्रज्ञप्तः तद्यथा—मूलप्रकृतिबन्धश्च उत्तरप्रकृतिबन्धश्च। एवं यावद्वैमानिकानाम्, यथा ज्ञानावरणीयेन दण्डको भणित एवं यावद् अन्तरायिकेण भणितव्यः ॥सू० ४॥

टीका—'कइविहे णं भंते! बंधे पन्नत्ते' कतिविधः खलु भदन्त! बन्धः प्रज्ञप्तः—कथितः? भगवानाह—'मागंदियपुत्ता!' इत्यादि, 'मागंदियपुत्ता' हे माकन्दिकपुत्र! 'दुविहे बंधे पन्नत्ते' द्विविधः—द्वि प्रकारको बन्धः प्रज्ञप्तः—कथितः,

---

इससे पहिले निर्जरा पुद्गल कहे गये हैं- ये पुद्गल बन्ध के होने पर ही होते हैं। अतः इसी विचार अब बन्ध का निरूपण सूत्रकार प्रश्नोत्तर रूप से कहते हैं।

'कइविहे णं भंते! बंधे पण्णत्ते?' इत्यादि।

टीकार्थ—'कइविहे णं भंते! बंधे पण्णत्ते' हे भदन्त! बन्ध कितने प्रकार का कहा गया है? ऐसा यह प्रश्न माकन्दिक पुत्र अनगार का है इसके उत्तर में प्रभुने कहा है—'मागंदियपुत्ता!' हे माकन्दिकपुत्र! 'दुविहे बंधे पन्नत्ते' बंध दो प्रकार का कहा गया है। 'तं जहा' वह

---

ત્રીજા સૂત્રમાં નિર્જરા પુદ્ગલ કહેવામાં આવ્યા છે. એ પુદ્ગલ, બન્ધ થાય ત્યારે જ થાય છે. તેથી એ સંબંધથી હવે બન્ધનું નિરૂપણ સૂત્રકાર કરે છે. તેનું પહેલું સૂત્ર આ પ્રમાણે છે.

'कइविहे णं भंते! बंधे पण्णत्ते' ઇત્યાદિ

ટીકાર્થ—'कइविहे णं भंते! बंधे पण्णत्ते' હે ભગવાન્ બંધ કેટલા પ્રકારના કહ્યા છે? આ પ્રમાણે માકંદિપુત્ર અનગારે ભગવાનને પૂછ્યું તેના ઉત્તરમાં પ્રભુએ કહ્યું કે—'मागंदियपुत्ता!' હે માકંદિકપુત્ર! 'दुविहे बंधे पण्णत्ते' બંધ બે પ્રકારના કહેવામાં આવેલ છે. 'तं जहा' તે આ પ્રમાણે છે.

तमेव दर्शयति-'तं जहा' इत्यादि, 'तं जहा' तद्यथा-'दव्ववंधे य भाववंधे य' द्रव्य बन्धश्च भावबन्धश्च। 'दव्ववंधे णं भंते! कइविहे पन्नत्ते' द्रव्यबन्धः खलु भदन्त! कतिविधः प्रज्ञप्तः? भगवानाह-'मागंदियपुत्ता! दुविहे पन्नत्ते' माकन्दिकपुत्र! द्विविधो द्रव्यबन्धः प्रज्ञप्तः, द्रव्यबन्धो नाम द्रव्येण स्नेहरज्ज्वादिना अथवा द्रव्यस्य परस्परेण बन्धो द्रव्यबन्ध इति स च द्रव्यबन्धो द्विविधः, तमेव दर्शयति-'तं जहा' तद्यथा-'पओगबंधे य वीससाबंधे य' प्रयोगबन्धश्च विस्रसाबन्धश्च। 'वीससाबंधे णं भंते! कइविहे पन्नत्ते' विस्रसाबन्धः खलु भदन्त! कतिविधः प्रज्ञप्तः, विस्रसा-स्वभावस्तया विस्रसया जायमानो बन्धो विस्रसाबन्धः स्वाभाविक इत्यर्थः यथा

इस प्रकार से है-'दव्ववंधे य भाववंधे य' एक द्रव्य बन्ध और दूसरा भाव बंध, अब माकन्दिकपुत्र अनगार प्रभुसे ऐसा पूछते हैं-'दव्व-बंधे णं भंते! कइविहे पण्णत्ते' हे भदन्त! द्रव्यबन्ध कितने प्रकार का कहा गया है? उत्तरमें भगवान् कहते हैं-'मागंदियपुत्ता! दुविहे पन्नत्ते' हे माकन्दिक पुत्र द्रव्य बन्ध दो प्रकार का कहा है-स्नेहरज्जु आदि के द्वारा जो बन्ध होता है, वह द्रव्यबन्ध है। अथवा द्रव्य का परस्पर में जो बन्ध होता है वह द्रव्यबन्ध है। द्रव्यबन्धके दो प्रकार ऐसे हैं -'पओगबंधे य वीससाबंधेय' एक प्रयोगबन्ध और दूसरा विस्रसाबन्ध रज्ज्वादिक प्रयोग से जो बन्ध होता है वह प्रयोगबन्ध है। और स्वाभा-विक जो बन्ध होता है वह विस्रसाबन्ध है। जैसे मेघमाला का बन्ध।

अब माकन्दिकपुत्र प्रभु से ऐसा पूछते हैं-'वीससा०' हे भदन्त! विस्रसा-बन्ध कितने प्रकार का है? उत्तर में प्रभु कहते हैं-'मागंदिय पुत्ता०!' हे

'दव्वबंधे य भावबंधे य" એક દ્રવ્યબંધ અને બીજો ભાવબંધ ફરીથી માકં-દિકપુત્ર પ્રભુને પૂછે છે કે 'दव्वबंधे णं भंते! कइविहे पण्णत्ते' હે ભગવન્ દ્રવ્ય બંધ કેટલા પ્રકારનો છે? તેના ઉત્તરમાં પ્રભુ કહે છે કે-'मांकंदियपुत्ता! दुविहे पण्णत्ते' હે માકંદિકપુત્ર દ્રવ્યબંધ બે પ્રકારનો કહેલ છે. સ્નેહ પાશ વગેરેથી જે બંધ થાય છે તે દ્રવ્યબન્ધ છે અથવા દ્રવ્યોનો અન્યો-ન્યમાં જે બંધ થય છે તે દ્રવ્ય બંધ છે. દ્રવ્યબંધના બે પ્રકાર આ પ્રમાણે છે. 'पओगबंधे य वीससाबंधे य' એક પ્રયોગ બન્ધ અને બીજો વિસ્રસાબંધ રજ્જુ વિગેરેના પ્રયોગથી જે બંધ થાય છે તે પ્રયોગબંધ છે. અને જે બંધ સ્વાભાવિક રીતે થાય તે વિસ્રસાબંધ છે. જેમકે મેઘસમૂહોનો સ્વાભાવિક બંધ.

હવે માકંદીપુત્ર અનગાર ફરીથી એવું પૂછે છે કે—'वीससाबंधे णं भदंत कइविहे पण्णत्ते?' હે ભગવન્, વિસ્રસાબંધ કેટલા પ્રકારનો છે? તેના

मेघमालायाः। भगवानाह-'मागंदियपुत्ता' इत्यादि, मागंदियपुत्ता' हे माकन्दिकपुत्र! 'दुविहे पन्नत्ते' द्विविधः प्रज्ञप्त', 'तं जहा' तद्यथा-'साइयवीससाबंधे य अनाइय वीससाबंधे य' सादिकविस्रसाबन्धश्च अनादिकविस्रसाबन्धश्च, तत्र सादिकः-आदिसहितो यः स्वभावापरपर्यायः विस्रसाबन्धो मेघमालादीनां स सादिकविस्रसाबन्धः। अनादिकः-आदिरहितश्च विस्रसाबन्धो धर्मास्तिकायादीनाम् परस्परम्। 'पओगबंधे णं भंते! कइविहे पन्नत्ते' प्रयोगबन्धः-रज्ज्वादिप्रयोगेण द्रव्याणां जीवकृतो बन्धः खलु भदन्त! कतिविधः प्रज्ञप्तः? भगवानाह-'मागंदियपुत्ता!' हे माकन्दिकपुत्र! 'दुविहे पन्नत्ते' द्विविधः प्रज्ञप्तः 'तं जहा' तद्यथा 'सिढिलबंधण बंधे य घणियबंधणबंधे' य' शिथिलबन्धनबन्धश्च गाढबन्धनबन्धश्चेति। 'भाव

माकन्दिकपुत्र! विस्रसाबन्ध 'दुविहे पन्नत्ते' दो प्रकार का कहा गया है-'तं जहा साइयविससा०' एक सादिकविस्रसाबन्ध और दूसरा अनादिकविस्रसाबन्ध आदि सहित जो विस्रसाबन्ध होता है वह सादिकविस्रसाबन्ध है जैसे मेघमालादिकों में होता है। यह उनका बन्ध किसीके द्वारा कराया नहीं जाता है। किन्तु स्वभावतः ही होता रहता है। तथा आदि रहित जो बन्ध होता है वह अनादिकविस्रसाबन्ध है। जैसे धर्मास्तिकायादिकों परस्पर में बन्ध है। जीवों द्वारा जो रज्जु आदि से बांधना होता है वह प्रयोगबन्ध है। यह प्रयोगबन्ध भी शिथिलप्रयोगबन्ध और गाढप्रयोगबन्ध के भेद से दो प्राकार का है। यही बात 'पओगबंधेणं' इत्यादि से लेकर 'मागंदियपुत्ता' आदि पदों द्वारा यहां प्रश्नोत्तर के रूप में कथन किया जाता है-इसमें

ઉત્તરમાં પ્રભુ કહે છે કે-'माकंदियपुत्ता! હે માકંદિક પુત્ર! વિસ્રસાબંધ 'दुविहे पण्णत्ते' બે પ્રકારનો કહેલ છે-'तं जहा साइय विससा०' એક સાદિક વિસ્રસાબંધ અને બીજો અનાદિ વિસ્રસાબંધ આદિ સહિત જે વિસ્રસાબંધ થાય છે તે સાદિ વિસ્રસાબંધ છે. જે રીતે વાદળો સ્વાભાવિક રીતે મેઘ-સમૂહોમાં થાય છે જે રીતે વાદળોના પુદ્ગલો એક થઈને બંધાય છે. આ તેનો બંધ કોઈ બીજા દ્વારા કરાવાતો નથી પરંતુ સ્વભાવથી જ થાય છે. તથા આદિ રહિત જે બંધ થાય છે, તે અનાદિ વિસ્રસાબંધ છે. જેવી રીતે ધર્માસ્તિકાયાદિકોમાં પરસ્પરમાં બંધ થાય છે. જીવોદ્વારા જે દોરી વગેરેથી બંધન થાય છે, તે પ્રયોગ બંધ છે. આ પ્રયોગબંધ પણ શિથિલ પ્રયોગબંધ અને ગાઢપ્રયોગબંધના ભેદથી બે પ્રકારનો છે. તેજ વાત 'पओगबंधे णं' ઇત્યાદિથી આરંભીને 'मागंदियपुत्ता' હે માકંદિયક પુત્ર આ પ્રમાણેના પદોથી અહિં પ્રગટ કરવામાં આવેલ છે.

बंधे णं भंते ! कइविहे पन्नत्ते' भावबन्धः खलु भदन्त ! कतिविधः प्रज्ञप्त इति प्रश्नः । 'मागंदियपुत्ता ! दुविहे भावबंधे पन्नत्ते' माकन्दिकपुत्र ! द्विविधो भावबन्धः प्रज्ञप्तः, 'त जहा' तद्यथा-मूलपगडिबंधे य उत्तरपगडिबंधे य' मूलप्रकृतिबन्धश्च उत्तरप्रकृतिबन्धश्च, तत्र भावेन मिथ्यात्वादिना बन्धो जीवस्येति भावबन्धः, अथवा भावस्य उपयोगभावाव्यतिरेकात् जीवस्य बन्धो भावबन्धः स च द्विविधो मूलप्रकृत्युत्तरप्रकृतिभेदादिति भावः । 'नेरइयाणं भंते ! कइविहे भावबंधे पन्नत्ते' नैरयिकाणां भदन्त ! कतिविधो भावबन्धः प्रज्ञप्तः ? भगवानाह-'मागंदियपुत्ता ! दुविहे भावबंधे पन्नत्ते' हे माकन्दिकपुत्र ! द्विविधो भावबन्धः

---

माकन्दिक पुत्रने प्रभु से ऐसा पूछा-'भावबंधे०' हे भदन्त ! भावबन्ध कितने प्रकार का कहा गया है ? उत्तरमें प्रभु कहते है-'मागंदियपुत्ता०' हे माकन्दिकपुत्र ! भावबन्ध जो जीवों के रागादि भावों से होता है दो प्रकार कहा है । एक 'मूलपग०' मूलप्रकृतिबन्ध और दूसरा उत्तर प्रकृतिबन्ध मिथ्यात्वादि के निमित्त से जो जीव के साथ कर्म का बन्ध होता है वह भावबन्ध कहा गया है । अथवा उपयोगरूप भाव से अभिन्न होने के कारण जीव के भाव का बन्ध है, यह भावबंध मूल प्रकृति और उत्तरप्रकृति के भेद से दो प्रकार का होता है इनमें से हे भदन्त !'नेरइयाणं' नैरयिक जीवों के भावबन्ध कितने प्रकार का होता है ? उत्तर में प्रभु कहते हैं। 'मागंदिय पुत्ता०' हे माकन्दिक पुत्र ! नारकजीवों के दोनों प्रकार का भावबन्ध होता है। मूलप्रकृतिरूप भावबन्ध

---

હવે ભાવબંધના વિષયમાં કથન કરવામાં આવે છે. તેમાં માકંદિપુત્રે પ્રભુને એવું પૂછ્યું છે કે-भावबंधे०' હે ભગવન્ ભાવબંધ કેટલા પ્રકારનો કહેલ છે ? તેના ઉત્તરમાં પ્રભુ કહે છે કે-मागंदिय पुत्ता !' હે માકંદીપુત્ર ! જીવોના રાગદ્વેષાદિથી જે બંધ થાય છે તે ભાવબંધ છે. તે ભાવબંધ બે પ્રકારનો કહેવામાં આવેલ છે. 'मूलपग०' એક મૂળપ્રકૃતિબંધ અને બીજો ઉત્તર પ્રકૃતિબંધ છે. મિથ્યાત્વ વિગેરેના નિમિત્તથી જીવની સાથે જે કર્મનો બંધ થાય છે, તે ભાવબંધ કહેવાય છે. અથવા ઉપયોગ રૂપભાવથી જુદા ન હોવાને કારણે જીવને જે ભાવનો બંધ થાય છે, તે ભાવબંધ છે. આ ભાવબંધ મૂલપ્રકૃતિ અને ઉત્તર પ્રકૃતિના ભેદથી બે પ્રકારનો છે. તેમાંથી 'नेरइयाणं०' હે ભગવન્ નૈરયિક જીવોને કેટલા પ્રકારનો ભાવબંધ થાય છે ? તેના ઉત્તરમાં પ્રભુ કહે છે કે 'मागंदिय पुत्ता !' હે માકંદિકપુત્ર ! નારકજીવોને બે પ્રકારનો ભાવબંધ થાય છે. નારકજીવ ને મૂલપ્રકૃતિરૂપ ભાવબંધ થાય છે,

प्रज्ञप्तो नारकाणाम् 'त जहा' तद्यथा-'मूलपगडिबंधे य उत्तरपगडिबंधे य' मूलप्रकृति बन्धश्च उत्तरप्रकृतिबन्धश्च ! 'एवं जाव वेमाणियाणं' एवं यावद्वैमानिकानाम्, एवं-नारकवदेव यावद् वैमानिकानाम्, तिरश्च आरभ्य त्रयोविंशति दण्डकानामपि इमौ भावबन्धौ भवत इति भावः। 'णाणावरणिज्जस्स णं भंते ! कम्मस्स' ज्ञानावरणीयस्य खलु भदन्त ! कर्मणः 'कइविहे भावबंधे पन्नत्ते' कतिविधो भावबन्धः प्रज्ञप्तः ? भगवानाह-'माकंदियपुत्ता ! दुविहे भावबंधे पन्नत्ते' हे माकन्दिकपुत्र ! द्विविधो भावबन्धो ज्ञानावरणीयस्य कर्मणो भवतीति, भेदद्वयमेव दर्शयति

भी उनके होता है उत्तर प्रकृतिरूप भावबन्ध भी उनके होता है। भावबन्धविषयक यह कथन 'एवं जाव वेमा०' नारक के जैसा यावत्-वैमानिकदेवों के भी जानना चाहिये। अर्थात् तिर्यञ्च से लेकर बाकी के २३ दण्डकों में भी ये दोनों भावबन्ध होते हैं। 'णाणावरणिज्जस्स०' अब इस सूत्र द्वारा यह पूछा जा रहा है कि ज्ञानावरणीय जो कर्म है उसका भावबन्ध कितने प्रकार का होता है ? उत्तर में प्रभुने कहा 'मागंदिय पुत्ता ! दुविहे भावबन्धे पण्णत्ते०' हे माकन्दिक पुत्र ! ज्ञानावरणीय कर्म का भावबन्ध मूलप्रकृति के रूपमें और उत्तरप्रकृति के रूपमें दोनों रूप में होता है। 'नेरइयाणं०' इस सूत्र द्वारा ऐसा पूछा गया है कि नैरयिक जीवों का जो ज्ञानावरणीय कर्म है उसका भावबन्ध कितने प्रकार का कहा है ? उत्तरमें प्रभु ने कहा है-'मागंदिक पुत्ता ! दुविहे भावबंधे पण्णत्ते०' हे माकन्दिक पुत्र ! नारक जीवों का जो ज्ञानावरणीय कर्म है

અને ઉત્તર પ્રકૃતિરૂપ ભાવબંધ પણ થાય છે. ભાવબંધ સંબંધી આ કથન 'एवं जाव वेमाणिया०' નારકજીવ પ્રમાણે યાવત્ વૈમાનિક દેવો સુધી સમજવું. અર્થાત્ તિર્યંચથી આરંભીને બાકીના તેવીસ દંડકોમાં પણ આ બન્ને પ્રકારના ભાવબંધ થાય છે. 'णाणावरणिज्जस्स०' આ સૂત્રાંશથી એ પૂછવામાં આવે છે કે-જ્ઞાનાવરણીય જે કર્મ છે, તેને ભાવબંધ કેટલા પ્રકારનો થાય છે ? તેના ઉત્તરમાં પ્રભુએ કહ્યું કે 'मागंदिय पुत्ता ! दुविहे भाववधे पण्णत्ते !' હે માકંદિક પુત્ર ! મૂલપ્રકૃતિબંધ પણાથી અને ઉત્તર પ્રકૃતિપણાથી જ્ઞાનાવરણીય કર્મનો ભાવબંધ બન્ને પ્રકારથી છે 'नेरइयाणं०' આ સુત્રથી એવું પૂછ્યું છે કે નૈરયિક જીવોને જે જ્ઞાનાવરણીય કર્મ છે, તેનો ભાવબંધ કેટલા પ્રકારનો છે.? તેના ઉત્તરમાં પ્રભુ કહે છે કે-'मागंदिय पुत्ता ! दुविहे भाववंधे पण्णत्ते० !' હે માકંદિય પુત્ર ! નારકજીવોનું જે જ્ઞાનવરણીય કર્મ છે, તેનો

—'तं जहा' तद्यथा—'मूलपगडिबंधे य उत्तरपगडिबंधे य' मूलप्रकृतिबन्धश्चोत्तरप्रकृतिबन्धश्चेति। 'नेरइयाणं भंते! णाणावरणिज्जस्स कम्मस्स कइविहे भावबंधे पन्नत्ते' नैरयिकाणां भदन्त! ज्ञानावरणीयस्य कर्मणः कतिविधो भावबन्धः प्रज्ञप्तः? 'मागंदियपुत्ता! दुविहे भावबंधे पन्नत्ते' माकन्दिकपुत्र! द्विविधो भावबन्धः प्रज्ञप्तः, 'तं जहा' तद्यथा-'मूलपगडिबंधे य उत्तरपगडिबंधे य' मूलप्रकृतिबन्धश्च उत्तरप्रकृतिबन्धश्च इत्युत्तरम्। 'एवं जाव वेमाणियाणं' एवं यावद्वैमानिकानाम्, एकेन्द्रियादारभ्य वैमानिकपर्यन्तजीवानां सम्बन्धिज्ञानावरणीयस्य कर्मणो मूल प्रकृत्युत्तरप्रकृतिनाम भावबन्धौ भवत इति। 'जहा णाणावरणिज्जेणं दंडओ भणिओ यथा ज्ञानावरणीयेन दण्डको भणितः, 'एवं जाव अंतराइएणं भाणियव्वो' एवं यावदन्तरायिकेण भणितव्यः, यथा ज्ञानावरणीयकर्मणो द्विप्रकारकभावबन्धघटितदण्डकस्य वक्तव्यता कथिता तथैव दर्शनावरणीय कर्मत आरभ्य वेदनीयमोहनीयायुष्कनामगोत्रान्तरायकर्मपर्यन्तमपि दण्डको भणितव्य एवेति भावः। ॥सू० ४॥

---

उसका भावबन्ध वहां दोनों प्रकार का है। मूलप्रकृतिरूप भी है और उत्तरप्रकृतिरूप भी है। 'एवं जाव वेमाणियाणं' इसी प्रकार का कथन एकेन्द्रिय से लेकर वैमानिक पर्यन्त जीवों के संबन्धी ज्ञानावरणीय कर्म के भावबन्ध के विषयमें भी जानना चाहिये। अर्थात् वहां पर ज्ञानावरणीय कर्म के दोनों प्रकार होते हैं। 'जहा णाणावरणिज्जेणं दंडओ भणिओ०' जैसा यह दण्डक ज्ञानावरणीय कर्म के सम्बन्धमें भावबन्ध विषयक कहा गया है। इसी प्रकार का दण्डक शेष दर्शनावरणीय, वेदनीय, मोहनीय, आयु, नाम, गोत्र और अन्तराय के भावबन्ध के दोनों प्रकार के सम्बन्धमें कह लेना चाहिये ॥ सू० ४ ॥

---

ભાવબંધ ત્યાં બન્ને પ્રકારનો કહ્યો છે. 'एवं जाव वेमाणियाणं' આ પ્રમાણેનું કથન એકેન્દ્રિયથી આરંભીને વૈમાનિક સુધીના જીવોના સંબંધમાં જ્ઞાનાવરણીય કર્મના ભાવબંધના વિષયમાં સમજવું. અર્થાત્ ત્યાં જ્ઞાનાવરણીય કર્મને ભાવબંધ બંને પ્રકારથી થાય છે. 'जहा णाणावरणिज्जेणं दंडओ भणिओ०' જ્ઞાનાવરણીય કર્મના સંબંધમાં જે પ્રમાણે આ ભાવબંધ વિષયનો દંડક કહેલ છે તેજ પ્રમાણે નો દંડક બાકીના દર્શનાવરણીય, વેદનીય, મોહનીય, આયુ, નામ, ગોત્ર અને અંતરાય કર્મ આ ઠ પ્રકારના કર્મને બન્ને પ્રકારના ભાવબંધનો સંબંધ સમજવો. ॥ સૂત્ર ૪ ॥

पूर्वं बन्धस्वरूपमुक्तम्, बन्धश्च कर्मण एव भवतीति कर्मसूत्रमाह-'जीवा णं भंते !' इत्यादि।

मूलम्-जीवा णं भंते ! पावे कम्मे जे य कडे जे य कज्जइ जे य कज्जिस्सइ अत्थियाइ तस्स केइ णाणत्तं हंता अत्थि, से केणट्ठेणं भंते ! एवं वुच्चइ जीवाणं पावे कम्मे जे य कडे जाव जे य कज्जिस्सइ, अत्थियाइ तस्स णाणत्ते? मागंदियपुत्ता ! से जहा नामए केइपुरिसे धणुं परामुसइ धणुं परामुसित्ता उसुं परामुसइ उसुं परामुसित्ता ठाणं ठाइ ठाणं ठाएत्ता आययकन्नाययं उसुं करेइ, आयय कन्नाययं उसुं करित्ता उड्ढं वेहासं उव्विहइ से नूणं मागंदियपुत्ता तस्स उसुस्स उड्ढं वेहासं उव्वीढस्स समाणस्स एयइ वि णाणत्तं जाव तं तं भावं परिणमइ वि णाणत्तं? हंता भगवं एयइ वि णाणत्तं जाव परिणमइ वि णाणत्तं। से तेणट्ठेणं मागंदियपुत्ता एवं वुच्चइ जाव तं तं भावं परिणमइ वि णाणत्तं नेरइयाणं भंते ! पावे कम्मे जे य कडे० एवं जाव वेमाणियाणं ॥सू० ५॥

छाया—जीवानां खलु भदन्त ! पापं कर्म यत् च कृतं यच्च क्रियते यच्च करिष्यते अस्ति चापि तस्य किञ्चित् नानात्वम्? हन्त, अस्ति। तत्केनार्थेन भदन्त ! एवमुच्यते जीवानां खलु पापं कर्म यत् कृतं यच्च क्रियते यच्च करिष्यते अस्ति चापि तस्य नानात्वम्? माकंदिक पुत्र ! तद्यथानामकः कश्चित् पुरुषः धनुः परामृशति, धनुः परामृश्य इषुं परामृशति, इषुं परामृश्य स्थाने तिष्ठति स्थाने स्थित्वा आयत कर्णायतमिषुं करोति, आयतकर्णायतमिषुं कृत्वा ऊर्ध्वं विहायसि उद्विध्यति तन्नूनं माकंदिकपुत्र ! तस्य इषोः विहायसि उद्विद्धस्य सतः एजतेऽपि नानात्वम् यावत् तं तं भावं परिणमतेऽपि नानात्वम्? हन्त, भगवन् एजते ऽपि नानात्वम् यावत् तं तं भावं परिणमतेऽपि नानात्वम् तत्तेनार्थेन माकंदिक पुत्र ! एवमुच्यते यावत् तं तं भाव परिणमतेऽपि नानात्वम्। नैरयिकाणां भदन्त ! पापं कर्म यत् कृतम् एवमेव यावद्वैमानिकानाम् ॥ सू०५॥

